लसद्गुणैः संस्ताविताः सुरेन्द्रैः, संपूजिता ये वरचंदनाद्यैः । शुभैस्त्रियोगैः प्रनताश्च सार्वान्, नमामि तान् तीर्थकरान् जिनेंद्रान् ॥ १ ॥ अनंत जन्मार्जितकर्मराशिं, सद्ध्यानराजत्तपसानिहत्य । निर्वाणसौख्यानुभवं दधुर्ये, सिद्धिस्थितान् तान्प्रणमामि सिद्धान् ॥२॥ समस्तलोकस्थितरूप्यरूपि–षट्द्रव्यतत्संस्थ गुणादिधर्मान् । जानंति येऽन्यान्प्रतिदेशयंति, सूरीश्वरान्तान् प्रणमामि भक्त्या ॥ ३ ॥ वंदे त्रिशुद्ध्याखिलवर्त्तमान–जिनोक्त सिद्धांत विदो वरिष्ठान् । गांभीर्यधैर्यादिगुण प्रधानान्, श्रीपाठकान्सन्मुनिपाठकाश्च ॥ ४ ॥ ये मोक्षमार्गं-प्रतिसाधयंति, सद्ज्ञान-सद्दर्शन-सद्व्रताद्यैः । वंदे मुनीन्तान्प्रतिबंधमुक्तान्, सर्वत्रराजन्मुनिधर्मरक्तान् ॥ ५ ॥ श्रद्धानरूपं च जिनादि तत्त्व–त्रये च मोहोपशमादिजातं । ज्ञानादिमूलं शिवदं नमामि, सद्दर्शनं चोपशमादि भेदं ॥ ६ ॥ समस्तहेयादिपदार्थसार्थ–प्रकाशकं मोहकुबोधनाशि । त्राणं च मत्यादिक पंचभेदं, सद्बोधियुग्-ज्ञानगुणं नमामि ॥ ७ ॥ यद्दर्शनज्ञानयुतं प्रदत्ते, निर्वाणसौख्यं वरसंवराढ्यं । भवाब्धि भव्यात्मकतारणैकपोतं च चारित्रगुणं स्तुवे तत् ॥ ८ ॥ निःशेषकर्मेंधनवह्निकल्पं दुःसाध्यनिर्वाणविसाधकं हि । कामप्रदं द्वादशभेदयुक्तं, तपोगुणं नौमि च लब्धिगेहं ॥ ९ ॥ इति श्री लब्धिमुनि विरचिता नवपद स्तुतिः समाप्ता ॥

॥ ॐ नमः ॥

॥ श्रीजिनदत्तसूरीश्वर सद्गुरुभ्यो नमः ॥

# ॥ अथ श्रीपालचरित्रं श्लोकबद्धं ॥



महावीरं महावीरं, प्रभुं नत्वा शिवंकरं । कथ्यते श्लोक बद्धेन, श्रीपालभूपतेः कथा ॥ १ ॥ अस्यैव जम्बूद्वीपस्य, क्षेत्रोस्ति भरताभिधः । तत्र मगध देशोस्ति, विविध संपदोत्तमः ॥ २ ॥ धनधान्यादि संपूर्ण, राजगृहाभिधं पुरं । तत्रास्ति श्रेणिको राजा, तत्र महापराक्रमी ॥ ३ ॥ तस्यासन् चेल्लणानन्दा, धारिणीप्रमुखा वराः । राज्ञ्यः सौन्दर्यशीलादि, गुणयुक्ता अनेकशः ॥ ४ ॥ तस्याभयकुमाराख्यः, पुत्रोभूद्विनयीगुणी । ओजस्वी च चतुर्बुद्धि, संपन्नो नीतिविद्वरः ॥५॥ भव्यान् विबोधयन् ग्रामा–नुग्रामं विहरन् प्रभुः । एकदा तत्पुरासन्ने,

महावीरः समागतः ॥६॥ समवसरणं देवैः, कृतं श्रीगौतमः पुनः । राजगृहं गतः स्वाम्या-ज्ञया वाचंयमाग्रणिः ॥७॥ वनपालोथ भूपाय, तद्वर्द्धापनिकां ददौ । प्रीतिदानं ददौ तस्मै, श्रेणिकोपि तदा मुदा ॥ ८ ॥ वंदनार्थंगतो राजा, परिवारेण संयुतः । गौतमस्वामिनं नत्वो-चितस्थाने स्थितोग्रतः ॥९॥ पर्षदिगौतमेनाथ, प्रारब्धा धर्म-देशना । दानशीलतपो भावा, वर्णिताः भवनाशकाः ॥१०॥ प्रधानः सर्वधर्मेषु, भावस्तत्रापि वर्णितः । सिद्धचक्र प्रभावश्च, सत्कृत्येषु विशेषतः ॥११॥ अर्हत्सिद्धगणींद्रोपाध्यायमुनिसुदर्शनैः । ज्ञानव्रततपोभिः स्यात्, सिद्ध-चक्रमिमैः पदैः ॥१२॥ श्रीपालनृपवत् सिद्धचक्र नवपदात्मकं। ध्यातं तद्रोगहरं राज्य, सुखशिवंकरं भवेत् ॥१३॥ तदा श्रीगौतमः पृष्टो, राज्ञा श्रीपालभूपतिः । कोसौ तेन कयारीत्याराधितं सिद्धचक्रकं ॥१४॥ तदा श्रीगौतमो-वादीत् मुनिसुव्रत शासने । चतुर्थारेभवच्चोजयिनीपुरी च मालवे ॥१५॥ प्रजापालनृपस्तत्राभूत्तन्मुख्याप्रियद्वयं । सौभाग्यसुन्दरीचाद्या, द्वितीया रूपसुन्दरी ॥१६॥ मिथ्याधर्मेरतास्त्याद्या, जैनधर्मेरताऽपरा । विवादे जायमाने स्व, धर्म स्थापयतःस्मते ॥१७॥ तथापिप्रीतिरन्योन्यं, स्वधर्मेरक्तयो-स्तयोः । आसीदेवं तयोर्बाढं, कालं सुखेन गच्छति ॥१८॥ अथैकदा समंगर्भोत्पत्तिरासीत् तयोर्द्वयोः । संपूर्ण समयेऽभूतां, सुतेतयोर्द्वयोःक्रमात् ॥१९॥

तदाजन्मोत्सवोराज्ञा, कृतस्तयोः पुनस्तयोः । सुनामस्थापनाकाले, तोषिताः ज्ञातिगोत्रिणः ॥२०॥ सौभाग्य-सुन्दरीरूपसुन्दरीसुतयोः क्रमात्। इति नामकृतं सुरसुन्दरी मदनसुन्दरी ॥२१॥ प्रवर्द्धंत्यौ मिथःक्रीडां, प्रकुर्वंत्यौ सुखेन च। ते द्वेऽपि पठनस्यार्हेऽभूतां राजसुते क्रमात् ॥२२॥ उक्तंच—लालयेत्पंचवर्षाणि, दशवर्षाणि ताडयेत्। प्राप्ते षोडशमे वर्षे, पुत्रं मित्रमिवाचरेत् ॥२३॥ ततः समर्पिता शिव—भूतये सुरसुन्दरी । मदनसुन्दरी राज्ञा, पठनार्थं सुबुद्धये ॥२४॥ मिथ्यात्विगुरु संसर्गात्, निपुणा सुरसुन्दरी। जातामिथ्यात्वधर्मे स्त्री, चतुःषष्ठि कलासु च ॥२५॥ जैनीय गुरु संसर्गात्, जाता मदनसुन्दरी। जैनधर्मरता स्त्रीणां, चतुःषष्ठिकलासु च ॥२६॥ जीवाजीवादि तत्वज्ञा, स्वान्य समय वेदिनी। कार्मप्रकृति शास्त्रेषु, निपुणाऽभूद्विशेषतः ॥२७॥ पुनःकर्मैव कर्त्तारं, जानाति जिनवाक्यतः । जिनभक्तौ रता दक्षा, चावश्यकादि कर्मसु ॥२८॥ शिवभूति सुबुद्धिभ्यां, धार्मिक व्यवहारिकां। कलांपपाठ्य राज्ञाग्रे, द्वेनीयेतेस्मते सुते ॥२९॥ सभायां तत्परीक्षार्थं, समस्यैकपदं मुदा। प्रोक्तं राज्ञापितचेदं, किं किं पुन्येन लभ्यते ॥३०॥ सुरसुन्दरी प्राह—प्राज्यं च राज्यं सुभगः सुभर्त्ता, नीरोगगात्रं च पवित्रभोज्यं। गानं च भृत्यं परिवारवर्गः, पुण्येन चैतत् सकलं लभेत ॥३१॥ द्वितीया मदनसुन्दरी प्राह—

शीलं च दानं विनयो विवेकः, सद्धर्मगोष्टिः प्रभुभक्ति पूजा। अखंडसौख्यं च प्रसन्नताहि, लभ्येत पुण्येन समस्तमेतत् ॥३२॥ तन्निशम्य सभालोकैः, प्रशंसा च कृता तयोः। राज्ञाऽथ पाठकाभ्यां हि, विपुलं दानमर्पितं ॥३३॥ कुरुजंगल देशेथ, शंखपुरीवराभवत्। महीपाल नृपस्तत्रोज्जयिनीनृप सेवकः ॥३४॥ तस्यारिदमनाख्योस्ति, पुत्रोरूपादि संयुतः। प्रजापालेश सेवार्थ—मुज्जयिनीं स चागतः ॥३५॥ एकस्मिन् समये सोऽरिदमनोराजपर्षदि। स्थितस्तदानृपाग्रेऽस्ति, सुरसुंदर्युपस्थिता ॥३६॥ सहर्षं सुरसुंदर्याऽरिदमनोविलोकितः। मिथोऽभवत्तयोः प्रीतिः, सा तस्योपरि मोहिता ॥३७॥ तदानृपेण तद्ज्ञात्वा, पृष्टा सा सुरसुन्दरी। कं वरं तव हे कन्ये!, करोम्यहं तयाकथि ॥३८॥ हे! तात ममचित्तेयो, यमरिदमनः स्थितः। श्रीमताभवताज्ञातः, स एव क्रियतां वरः ॥३९॥ ममाभिप्राय एषोस्ति, पश्चाद्भवद्रुचिर्यथा। मे प्रमाणं तथा किंच, त्वमेव मम पालकः ॥४०॥ त्वमेव ममकर्त्तात्वमेवषोषक ईश्वरः। इत्यादिवचसा तातं, संतोष्य तुष्णिकं स्थिता ॥४१॥ तदाकृतस्तयो राज्ञा, संबंधोरुचितः पुनः। चित्ते सौभाग्यसुन्दर्याः, सर्वनगरवासिनां ॥४२॥ द्वितीय दिवसे राज, पर्षदि मदनसुन्दरी। राज्ञाहूता समागत्य, सापि नत्वा नृपं स्थिता ॥४३॥ राज्ञापृष्टा तदासापि, हे कन्ये! तव कं वरं। करोमि मेऽत्रसेवार्थं,

यथारुचि वरस्तेषां, मध्यात् कार्यस्त्वयाथ सा। किमपिलज्जयानावग्, राज्ञापृष्ट
कुमाराः संति चागताः ॥४४॥ यथारुचि वरस्तेषां, मध्यात् कार्यस्त्वयाथ सा। कुलकन्या कथं वदेत् ॥ ४६ ॥
पुनश्च सा ॥४५॥ तथापि नैव सा ब्रूते, पृच्छमाना पुनःपुनः। सा प्राह भवतामग्रे, कुलकन्या कथं वदेत् ॥ ४६ ॥
यन्मेऽमुको वरः कार्यो, ऽमुको नेति न भाति मे। इयंरीति समीचीना, ऽन्यस्तुनिमित्तमात्रकः ॥४७॥ युग्मं ॥ ततः
कर्मस्थितं यत्तत्, सर्वं भवति नापरैः। कृतं किमपि यद्भाव्यं, तद्भवत्येव देहिनां ॥४८॥ ततश्च मम संबंधो, येना-
स्ति जंतुना समं। वरः कुत्रापि चागत्य, स एव मे मिलिष्यति ॥४९॥ कोपि कर्म विना नान्यः,दातास्ति सुखदुःखयोः
इष्टानिष्टादिवस्तूनां,संयोगकारकः पुनः ॥५०॥ तदा राजा वचस्तस्याः, श्रुत्वा कोपं समागतः। दुष्टेयं कन्यकादुःखे
पातनीया मयाध्रुवं॥५१॥विचार्येति पुनःप्राह, हे सुते! ब्रूहि कस्य च। प्रसादेन सुखं भुंक्ते,भोजनाभरणादिकं ॥५२॥
ते सर्वं सुखकृत्सम्यग् वस्त्वाधीनं ममैव च। सुखितेमयि ते सौख्यं, तेदुःखं मयिदुःखिते ॥५३॥सर्वत्रैव प्रसादोऽस्ति,
मेऽत्रलोकेहऽमेव च। सुखदुःखस्यदाताहं,कर्ता कर्म न हे सुते ॥५४॥यत्किंचिदत्रकार्यं तत्.सर्वमाधीनमेव मे। रंकं नृपं
नृपं रंकं, चैवं सर्वंकरोम्यहं ॥५५॥ दुर्भागिण्यासि हे पुत्रि, त्वं पठितापि दृश्यसे। मूर्खा यतः स्वकीयं न, त्यजसि हठ-
वादकं ॥५६॥ अतोऽहं त्वां यदादुःखे, पातयिष्ये वराय च। रोगिणे त्वां प्रदास्ये मे, तदा तोषं भविष्यति ॥५७॥

अधुनापि गतं नास्ति, किमप्यतः सुते वरं । प्रयाचस्व यथेच्छं स्व, मुखेनैवं प्रजल्प च ॥५८॥ कर्तात्वमेव हे तात,
त्वमेव परमेश्वरः। इत्यादितन्निशम्यैवं, प्राह मदनसुंदरी ॥५९॥ हे तात कुरु मा गर्वं, सर्वकार्यस्य जायते। हानिर्गर्वे-
ण गर्वेण, प्राज्यं राज्यं प्रगच्छति ॥६०॥ कर्ताकर्मैव नान्योस्ति, तवैषा भारती मम । तिष्ठति हृदये नैव, जिनवचन
वासिते ॥६१॥ यादृश एव वरो भावी, तं वरिष्यामि तादृशं । तत् श्रुत्वा चिंतितं राज्ञाऽनया मे हीलना कृता ॥६२॥
सुबुद्धिपाठकेनास्यै, विनयादि न शीक्षितं । बालेयं मंदभाग्यास्ति, ध्रुवं मंदमतिः पुनः ॥६३॥ पुनः सा प्राह हे तात,
काचित्सुताऽर्पिता भवेत् । दुष्कुले सुखिनी काचित्, सुकुले दुःखिनी पुनः ॥६४॥ तत्र स्वकृतकर्मैव, कारणं पितरौ
न तु। द्वयमध्याद्यदैकोपि, विरमति न वादतः ॥६५॥ तदा सुबुद्धिमंत्रीशोऽवादीद् भो भूपते भवान् । अनयाकन्य-
यासार्द्धं, वृथावादं करोति किं ॥६६॥ अधुना वनपालेन, विज्ञप्तमस्ति सांप्रतं । यत्प्रफुल्लितमस्त्युच्चै, र्वसंतसमये
वनं ॥६७॥ तत्रातोगम्यतामित्या-ख्यातेसतिनराधिपः । चचालाऽश्वंसमारुह्य, पुराच्च बहिरागतः ॥६८॥ अग्रेगच्छ
न्नृपोदूरा-त्मार्गेदृष्ट्वोच्छलद्रजः । जनकोलाहलं श्रुत्वा,ऽपृच्छत्सुबुद्धि मंत्रिणं ॥६९॥ श्रूयते कस्य हे मंत्रिन् ! कोला-
हलो पुरः पुनः। के आयांति तदा मंत्री, नृपंप्रति जगाद च ॥७०॥ राजन् ! कुष्टिसमूहोयं, पूर्वदुष्कृतकर्मतः । सप्तशत-

नराजाता, समकालं च कुष्टिनः ॥७१॥ वर्त्तते राजनीतिश्चे-तेषांमध्येपि याचनां। ते कुर्वंति नृपःप्राह, केयं तद्राज-
नीति का ? ॥७२॥ तदा सुबुद्धिना प्रोक्त-मूंबररोगपीडितः। कश्चिद्राजसुतोस्त्येषां, स्वाम्यूंबराख्यराणकः ॥७३॥ छ-
त्रंविराजते तस्मिन्, वीज्यते स च चामरैः। गलितांगुलिमंत्र्यस्ति, तस्यनीति विचक्षणः ॥७४॥ तस्यगलितस-
र्वांग, दुर्गपालोऽस्ति कुष्टिनः। सर्वे च सेवकाःसंति, ते च राजकुलोद्भवाः ॥७५॥ ते गलितत्वचः पूति, व्रणक्लामि-
कुलाकुला। दुर्गंधवासितावेसरारूढामक्षिकाकुलाः ॥७६॥ ते महादुःखिनः प्रेता-काराः साक्षाच्च नारकाः। इवागच्छं-
ति चैतेषां, समीचीनं न दर्शनं ॥७७॥ नातोग्रेगम्यतामेषां, पवनस्पर्शनादपि। रोगोत्पत्तिर्भवेत्तस्मा–दन्यमार्गेण
गम्यताम् ॥७८॥ तत्श्रुत्वाऽपरमार्गेण, राजाचचाल शीघ्रतः। इतोज्ञातंस्वरूपं त-द्गलितांगुलि मंत्रिणा ॥७९॥ ततो-
सौ वेसरारूढो,समागत्यावदन्नृपं। हे राजेन्! तव कीर्तिर्भूतलेत्रवरिवर्त्तते ॥८०॥ अस्माकमूंबरराणा, प्रसादेनात्रभू-
तले। कस्यापिन्यूनतानास्ति, धनधान्यादिवस्तुनाम् ॥८१॥ किंचमालवराजाग्रे, यत्किंचित्कोपि याचते। तत्सर्वं स
ददातीति, तवकीर्तिः श्रुतास्ति च ॥८२॥ युष्मत्पार्श्वेवयं यांचां, कृतेऽत्र च समागताः। अस्मदूंबरभूपस्य, भार्यै-
काऽपि न विद्यते ॥८३॥ देयाऽतोभवतापुत्री, चैका यादृशी तादृशी। अस्मद्राज्ञेवयंस्मःसत्. क्षत्रियाः कुष्टिनो भवन्

अधुनापि गतं नास्ति, किमप्यतः सुते वरं । प्रयाचस्व यथेच्छं स्व, मुखेनैवं प्रजल्प च ॥५८॥ कर्तात्वमेव हे तात, त्वमेव परमेश्वरः। इत्यादितन्निशम्यैवं, प्राह मदनसुंदरी ॥५९॥ हे तात कुरु मा गर्वं, सर्वकार्यस्य जायते। हानिर्गर्वेण गर्वेण, प्राज्यं राज्यं प्रगच्छति ॥६०॥ कर्ताकर्मैव नान्योस्ति, तवैषा भारती मम । तिष्ठति हृदये नैव, जिनवचन वासिते ॥६१॥ यादृश एव वरो भावी, तं वरिष्यामि तादृशं। तत् श्रुत्वा चिंतितं राज्ञाऽनया मे हीलना कृता ॥६२॥ सुबुद्धिपाठकेनास्यै, विनयादि न शीक्षितं। बालेयं मंदभाग्यास्ति, ध्रुवं मंदमतिः पुनः ॥६३॥ पुनः सा प्राह हे तात, काचित्सुताऽर्पिता भवेत्। दुष्कुले सुखिनी काचित्, सुकुले दुःखिनी पुनः ॥६४॥ तत्र स्वकृतकर्मैव, कारणं पितरौ न तु। द्वयमध्याद्यदैकोपि, विरमति न वादतः ॥६५॥ तदा सुबुद्धिमंत्रीशोऽवादीद् भो भूपते भवान्। अनयाकन्ययासार्द्धं, वृथावादं करोति किं ॥६६॥ अधुना वनपालेन, विज्ञप्तमस्ति सांप्रतं। यत्प्रफुल्लितमस्त्युच्चै, र्वसंतसमये वनं ॥६७॥ तत्रातोगम्यतामित्या-ख्यातेसतिनराधिपः। चचालाऽश्वंसमारुह्य, पुराच्च बहिरागतः ॥६८॥ अग्रेगच्छन्नृपोदूरा-त्मार्गेदृष्ट्वोच्छलद्रजः। जनकोलाहलं श्रुत्वा,ऽपृच्छत्सुबुद्धि मंत्रिणं ॥६९॥ श्रूयते कस्य हे मंत्रिन्! कोलाहलो पुरः पुनः। के आयांति तदा मंत्री, नृपंप्रति जगाद च ॥७०॥ राजन्! कुष्टिसमूहोयं, पूर्वदुष्कृतकर्मतः। सप्तशत-

नराजाता, समकालं च कुष्टिनः ॥७१॥ वर्त्तते राजनीतिश्चै-तेषांमध्येपि याचनां। ते कुर्वंति नृपःप्राह, केयं तद्राज-
नीति का ? ॥७२॥ तदा सुबुद्धिना प्रोक्त-मूंबररोगपीडितः। कश्चिद्राजसुतोस्त्येषां, स्वाम्यूंबराख्यराणकः ॥७३॥ छ-
त्रंविराजते तस्मिन्, वीज्यते स च चामरैः। गलितांगुलिमंत्र्यस्ति, तस्यनीति विचक्षणः ॥७४॥ तस्यगलितस-
र्वांग, दुर्गपालोऽस्ति कुष्टिनः। सर्वे च सेवकाःसंति, ते च राजकुलोद्भवाः ॥७५॥ ते गलितत्वचः पूति, व्रणक्लामि-
कुलाकुला। दुर्गंधवासितावेसरारूढामक्षिकाकुलाः ॥७६॥ ते महादुःखिनः प्रेता-काराः साक्षाच्च नारकाः। इवागच्छं-
ति चैतेषां, समीचीनं न दर्शनं ॥७७॥ नातोग्रेगम्यतामेषां, पवनस्पर्शनादपि। रोगोत्पत्तिर्भवेत्तस्मा-दन्यमार्गेण
गम्यताम् ॥७८॥ तत्श्रुत्वाऽपरमार्गेण, राजाचचाल शीघ्रतः। इतोज्ञातंस्वरूपं त-द्गलितांगुलि मंत्रिणा ॥७९॥ ततो-
सौ वेसरारूढो,समागत्यावदन्नृपं। हे राजेन्! तव कीर्तिर्भूतलेत्रवरिवर्त्तते ॥८०॥ अस्माकमूंबरराणा, प्रसादेनात्रभू-
तले। कस्यापिन्यूनतानास्ति, धनधान्यादिवस्तुनाम् ॥८१॥ किंचमालवराजाग्रे, यत्किंचित्कोपि याचते। तत्सर्वं स
ददातीति, तवकीर्तिः श्रुतास्ति च ॥८२॥ युष्मत्पार्श्वेवयं यांचां, कृतेऽत्र च समागताः। अस्मदूंबरभूपस्य, भार्यै-
काऽपि न विद्यते ॥८३॥ देयाऽतोभवतापुत्री, चैका यादृशी तादृशी। अस्मद्राज्ञेवयंस्मःसत्. क्षत्रियाः कुष्टिनो भवन्

॥८४॥ तदस्मद्दूषणं कस्याग्रे कथ्यते महांश्च ते। प्रतापोस्ति ततोऽस्माभि-रेका कन्या प्रयाच्यते ॥८५॥ इतितद्ध-
चनं श्रुत्वा, विहस्य प्राह भूपतिः। भो! गलितांगुले कन्या, रोगिणे दीयते कथं ॥८६॥ अतोऽन्यद्वस्तु याचध्वं, यूयं
तच्च ददाम्यहं। गलितांगुलिराहाथ, नान्यत्किमपि युज्यते ॥८७॥ परंतु तेऽनया वाचा, कीर्त्तिलोपो भविष्यति।
वयं यत्र प्रयास्याम-स्तत्राऽस्माभिर्वदिष्यते ॥८८॥ यन्मालवनृपः पूर-यति याचक कामितं। नेतिराजन्नतस्तुभ्यं,
स्वस्तिर्यामो वयं पुनः ॥८९॥ तदा मदनसुंदर्या, दर्शयाम्यधुना फलं। कर्मणोस्यावरो युक्तः, कुष्टार्त्त एष उंबरः
॥९०॥ इति विचार्य भूपोवग्। भो गलितांगुलेऽधुना। स्वस्थानं गच्छ पश्चादा-गंतव्यं मम पर्षदि ॥९१॥ तद्भवि-
ष्यति यत्किंचि-द्भावीति गलितांगुलिः। श्रुत्वा गमन्निजस्थाने-ऽथवलित्वा ततो नृपः ॥९२॥ पर्षद्यागत्य चाकार्य,
मदनसुन्दरीमवक्। हे! सुतेऽहंतु वांच्छामि, तव सुखं न चासुखं ॥९३॥ मन्यस्व त्वमतोऽद्यापि, पितृकृत हि ल-
भ्यते। सुखासुखादिकं सर्व-मितिवद निजाननात् ॥९४॥ मदनसुंदरी श्रुत्वा, तदाऽह तात! लभ्यते। स्व भाग्येन
सुखंदुःखं, नतु पितृ कृतं पुनः ॥९५॥ तन्निशम्य नृपः क्रुद्धः, प्राह तां प्रति हे सुते। त्वद्भाग्येन समायातो-
स्त्यूंबराख्य वरस्तव ॥९६॥ तदा कन्याऽवदत्तात, चेन्मद्भाग्येन चागतः। तदासुखेन चायातु मे पाणि ग्रहणाय च

॥९७॥ तदा राजोंवरं राण—माकार्य प्राह मे सुता । मदनसुन्दरी चैव, त्वां परिणेतु मिच्छति ॥९८॥ अतस्तुभ्यं मया दत्ता, तन्निशम्योंवरोऽवदत् । राजन् ! पुत्र्या समं वादो, युष्माभिर्युज्यते न हि ॥९९॥ इयं तु सुकुलोद्भूता, शुभ लक्षणलक्षिता । नीरोगास्ति पुनश्चाऽहं, त्वस्मि कुष्टी कुलक्षणः ॥१००॥ नाऽतोऽनया समं युक्तः, संबंधो मे परं च ते । कीर्त्तिलोपो जने क्लेषो, विषादश्च भविष्यति ॥१०१॥ नातोऽहं तां ग्रहिष्यामि, यादृशी तादृशी सुता । भवत्कुलोद्भवा काचित्, मह्यं देया च कुष्टिने ॥१०२॥ तन्निशम्यनृपोऽवादीत्, हे ऊंबर ! करोम्यहं । किं भाग्येऽस्यावरोऽसि त्वं, कर्मवादेत्वमागतः ॥१०३॥ मदनसुन्दरी राज्ञा, प्रोक्ता हे पुत्रि ! चेत्तव । प्रतिज्ञास्ति च सत्येयं, तर्हि वरोंवरं वरं ॥१०४॥ मदनसुन्दरी श्रुत्वा, पितुर्वचः स्वचेतसि । धैर्यधृत्वा स्वहस्तेन, पस्पर्शोंबर हस्तकं ॥१०५॥ तद्विलोक्य जनाः सर्वे, चक्रुर्हाहारवं पुनः । मिथो वदंश्चनिर्भाग्ये—यं यया कोपितो नृपः ॥१०६॥ सोथोंवरः खरारूढः, स्वस्थानेऽगात्तया समं । तदा मदनसुन्दर्या, अपवादं जगुर्जनाः ॥१०७॥ निंदंति जननीं केपि, केपि निंदंति पाठकं । धर्मं निंदंति केचिच्च, पितरं कोपि निंदति ॥ १०८ ॥ चक्रुः सुरसुंदर्याः, प्रशंसां वर्त्तमानके । यादृशं दृश्यते लोके—स्तादृशमेव कथ्यते ॥ १०९ ॥ श्रुत्वा राजानिजाश्लाघां, सहारिदमनेन च । महर्द्ध्या सुर-

॥८४॥ तदस्मद्दूषणं कस्याऽग्रे कथ्यते महांश्च ते। प्रतापोस्ति ततोऽस्माभि-रेका कन्या प्रयाच्यते ॥८५॥ इतितद्व-चनं श्रुत्वा, विहस्य प्राह भूपतिः। भो! गलितांगुले कन्या, रोगिणे दीयते कथं ॥८६॥ अतोऽन्यद्वस्तु याचध्वं, यूयं तच्च ददाम्यहं। गलितांगुलिराहाथ, नान्यत्किमपि युज्यते ॥८७॥ परंतु तेऽनया वाचा, कीर्त्तिलोपो भविष्यति। वयं यत्र प्रयास्याम-स्तत्राऽस्माभिर्वदिष्यते ॥८८॥ यन्मालवनृपः पूर-यति याचक कामितं। नेतिराजन्नतस्तुभ्यं, स्वस्तिर्यामो वयं पुनः ॥८९॥ तदा मदनसुंदर्या, दर्शयाम्यधुना फलं। कर्मणोस्यावरो युक्तः, कुष्टार्त्त एष ऊंबरः ॥९०॥ इति विचार्य भूपोवग्। भो गलितांगुलेऽधुना। स्वस्थानं गच्छ पश्चादा-गंतव्यं मम पर्षदि ॥९१॥ तद्भवि-ष्यति यत्किंचि-द्भावीति गलितांगुलिः। श्रुत्वा गमन्निजस्थाने-ऽथवलित्वा ततो नृपः ॥९२॥ पर्षद्यागत्य चाकार्य, मदनसुन्दरीमवक्। हे! सुतेऽहंतु वांच्छामि, तव सुखं न चासुखं ॥९३॥ मन्यस्व त्वमतोऽद्यापि, पितृकृत हि ल-भ्यते। सुखासुखादिकं सर्व-मितिवद निजाननात् ॥९४॥ मदनसुंदरी श्रुत्वा, तदाऽह तात! लभ्यते। स्व भाग्येन सुखंदुःखं, नतु पितृ कृतं पुनः ॥९५॥ तन्निशम्य नृपः क्रुद्धः, प्राह तां प्रति हे सुते। त्वद्भाग्येन समायातो-स्त्यूंबराख्य वरस्तव ॥९६॥ तदा कन्याऽवदत्तात, चेन्मद्भाग्येन चागतः। तदासुखेन चायातु मे पाणि ग्रहणाय च

॥९७॥ तदा राजोंवरं राण–माकार्य प्राह मे सुता। मदनसुन्दरी चैव, त्वां परिणेतु मिच्छति ॥९८॥ अतस्तुभ्यं मया दत्ता, तन्निशम्योंवरोऽवदत्। राजन्! पुत्र्या समं वादो, युष्माभिर्युज्यते न हि ॥९९॥ इयं तु सुकुलोद्भूता, शुभ लक्षणलक्षिता। नीरोगास्ति पुनश्चाऽहं, त्वस्मि कुष्टी कुलक्षणः ॥१००॥ नाऽतोऽनया समं युक्तः, संबंधो मे परं च ते। कीर्त्तिलोपो जने क्लेषो, विषादश्च भविष्यति ॥१०१॥ नातोऽहं तां गृहिष्यामि, यादृशी तादृशी सुता। भवत्कुलोद्भवा काचित्, मह्यं देया च कुष्टिने ॥१०२॥ तन्निशम्यनृपोऽवादीत्, हे उंबर! करोम्यहं। किं भाग्येऽस्यावरोऽसि त्वं, कर्मवादेत्वमागतः ॥१०३॥ मदनसुन्दरी राज्ञा, प्रोक्ता हे पुत्रि! चेत्तव। प्रतिज्ञास्ति च सत्येयं, तर्हि वरोंवरं वरं ॥१०४॥ मदनसुन्दरी श्रुत्वा, पितुर्वचः स्वचेतसि। धैर्यधृत्वा स्वहस्तेन, पस्पर्शोंबर हस्तकं ॥१०५॥ तद्विलोक्य जनाः सर्वे, चक्रुर्हाहारवं पुनः। मिथो वदंश्चनिर्भाग्ये–यं यया कोपितो नृपः ॥१०६॥ सोऽोंवरः खरारूढः, स्वस्थानेऽगात्तया समं। तदा मदनसुन्दर्या, अपवादं जगुर्जनाः ॥१०७॥ निंदंति जननीं केपि, केपि निंदंति पाठकं। धर्मं निंदंति केचिच्च, पितरं कोपि निंदति ॥ १०८ ॥ चक्रुः सुरसुंदर्याः, प्रशंसां वर्त्तमानके। यादृशं दृश्यते लौके–स्तादृशमेव कथ्यते ॥ १०९ ॥ श्रुत्वा राजानिजाश्लाघां, सहारिदमनेन च। महर्द्ध्या सुर-

सुंदर्याः, पाणिग्रहमकारयत् ॥ ११० ॥ तत श्च सुरसुंदर्या, सहारिदमनोपि च । राज्ञः शिक्षां समादाय, चचाल स्वपुरीं प्रति ॥ १११ ॥ क्रमाच्छंखपुरीं प्राप्तो–रिदमनः स्वयं समं । प्रियया च बहिस्तस्थौ, सर्वेऽन्ये स्व गृहं गताः ॥ ११२ ॥ इति प्रथम सर्गः समाप्तः ॥ १ ॥



## ॥ अथ द्वितीयः सर्गः ॥ २ ॥



अथोंबर महाराजो, मदनसुंदरीं प्रति । तत्परीक्षार्थमित्येवं, मधुरया गिराऽवदत् ॥ १ ॥ हे प्रिये ! तव ताते-ना–युक्तं कार्यमिदं कृतं । यन्मह्यं कुष्टिने दत्ता, त्वं त्वं तु रूपशालिनी ॥ २ ॥ काकस्यसदृशोऽहं तु, ततः संबंध आवयोः । युक्तोनान्योन्यमद्यापि, नास्ति किमपि ते गतं ॥ ३ ॥ समर्पितासि कोपेन, राज्ञा त्वं मे त्वयापि च । कर्मवादेन मे हस्त, स्पर्शः कृतोऽस्ति कुष्टिनः ॥ ४ ॥ किंतु मद्देह संसर्गात्, ते रोगो भाव्यतो मया । प्रोच्यते त्वं विवाहाद्य–न्य नरेणसमं कुरु ॥ ५ ॥ मदन सुन्दरी श्रुत्वा, तद्रुदंती प्रियं प्रति । प्रोवाच हे ! प्रियाऽस्मिन्मे, भवे भर्त्तात्वमेव हि ॥ ६ ॥ त्यजंति निजमर्यादां, सूर्य सुमेरु सागराः । तथापि त्वां स्वशीलं च, त्यजाम्यहं न कर्हिंचित् ॥७॥ अतः परं न वार्त्तेयं, युष्माभिः कर्हिंचित्पुनः । कार्यासोऽपि ततोऽकार्षीत्, स्त्रीसंबंधस्तया समं ॥८॥

प्रभातेऽथावदत् स्वीय, पतिं मदनसुंदरी। हे! नाथात्रपुरेऽस्ति श्री–ऋषभदेव मंदिरं ॥९॥ आवाभ्यां दर्शनायातः,
शीघ्रं स्नानं विधाय च। पुष्पफलाक्षतादीनि, गृहीत्वा तत्र गम्यते ॥१०॥ इत्युक्ते सर्व सामग्रीं, कृत्वोंबरस्तया-
समं। चैत्येगत्वा जिनंनत्वा, निषसाद प्रभोः पुरः ॥११॥ मदनसुन्दरी प्राह, हे स्वामिन्! प्रकरोम्यहं। स्तुतिं सा
सावधानेन, श्रोतव्या भावपूर्वकं ॥१२॥ हे आदिनाथ! देवाधि–देव! हे परमेश्वर!. त्रिलोकनाथ! हे स्वामिन्!,
वीतराग जिनेश्वर! ॥ १३ ॥ सुरासुर नरेंद्राद्यैः, सेवित पादपंकज। केवल ज्ञानतो लोका–ऽलोक भाव प्रकाशक
॥ १४ ॥ हे विश्वेश! जगत्पूज्य! भवात्तरण तारण। आवयोः शरणं स्वामिन्! त्वमेवासि भवे भवे ॥ १५ ॥
विभुर्जगत्त्रयाधारो, रोगशोकादि नाशकः। समर्थश्च त्वमेवाधि, व्याधि हरण आवयोः ॥ १६ ॥ भवंतं पश्य-
तोर्दुष्ट, कुष्टादीनामभूच्च नौः। शांतिरद्यैव भक्तेभ्यो, निर्वाण सुखदायक ॥ १७ ॥ भावेनेत्यादिकां चक्रे, स्तुतिं
मदन सुंदरी। उंबरेणापि भावेन, तत्कृता सा स्तुतिः श्रुता ॥१८॥ तदा चक्रेश्वरी देव्या, प्रेरिते कंठतः प्रभोः।
झटिति पुष्पमाला श्री–फलेपतिते तदंकयोः ॥१९॥ तत् दृष्ट्वा मदना प्राह, हे स्वामिन्! प्रगतस्तव। रोगोऽद्यैव
प्रसादेन, प्रभोर्निर्वाण कारिणः ॥२०॥ भवद्भिः श्रीफलंग्राह्यं, मालांगृन्हम्यहं पुनः। ततो नत्वा प्रभुं तौ च, निर्गतौ

जिनमंदिरात् ॥२१॥ आसन्नोपाश्रये गत्वा, मुनिचंद्र मुनीश्वरं । नत्वा तत्र स्थितौ धर्म–देशना श्रवणाय तौ ॥२२॥ "धर्मात्सुखं दुःखक्षयश्च ज्ञेय, धर्मेण राज्यं सुकुलोद्भवः स्यात् । धर्मस्य सेवा सफली सदैव, धर्मे प्रयत्नो मनुजैर्विधेयः ॥२३॥" इति धर्मकथां श्रुत्वा, मुनि मुखाद्गताग्रहं । केचिद्भव्याः स्थितास्तत्र, केचित् धर्माभिलाषुकाः ॥२४॥ अथ श्रीमुनिचंद्रेण, पृष्टा मदनसुन्दरी । पूर्वपरिचयात्कोऽसौ, त्वया समं नरोत्तमः ॥२५॥ पातयंती तदाश्रूणि, सर्वं मदनसुन्दरी । स्व स्वरूपं गुरोरग्रे, कथयामास विस्तरात् ॥२६॥ पुनरपि तया प्रोक्तं, हे गुरो ! मम मानसे । खेदः कोप्यपरो नास्ति, भवद्गुरु प्रसादतः ॥ २७॥ परं मिथ्यात्विनो जैन–शासनं हीलयंत्यतः । कोप्युपायो भवच्छ्राद्ध, रोगशांत्यै प्रकथ्यतां ॥२८॥ तत् श्रुत्वा मुनिचन्द्रेण, भावि लाभमवेत्य च । कथयामास तस्यै च, धर्मोपायं सुनिर्मलं ॥ २९॥ हे भद्रे ! प्राग् कृतानिष्ट, कर्माष्टक विनाशकः । रोगहर इहामुत्र, सुख संपत्ति कारकः ॥ ३० ॥ शोक संताप दुर्भाग्या–धि व्याधि रोग नाशकः । वंध्यत्व विषकन्यत्व, विष कष्टादि नाशकः ॥३१॥ अथ नवपदाराध–नोपायोस्त्यात्र शासने । अतः कुरु समं पत्या, त्वं तदाराधनां शुभे ॥३२॥ तेनास्य दुष्टकुष्टादि, रोगनाशो भविष्यति । राज्यादि सुख संपत्ति, र्नामानीमानि तस्य च ॥ ३३ ॥ अर्हत्सिद्धगणी-

द्रोपा—ध्याय साधुपदानि च। दर्शन ज्ञान चारित्र, तपः पदानि शासने ॥३४॥ एतैर्नवपदैः कृत्वा, सिद्ध चक्रं च
जायते। विद्याप्रवाद पूर्वोक्ता—म्नायादुध्धृमस्ति तत् ॥ ३५ ॥ श्रीजिनशासने सिद्धाः, सिद्धिं यास्यंति ये
नराः। सिध्यंति तेऽखिला ज्ञेयाः, सिद्धचक्र प्रभावतः ॥ ३६ ॥ तर्हि रोगविनाशे का, वार्ताऽतः शुभभावतः।
समाराध्यं युवाभ्यां त—द्येन शांतिर्भविष्यति ॥३७॥ परमाराधकस्तस्य, शांतो दांतो जितेंद्रियः। भक्तियुक्तो
गुरौ देवे, जितनिद्रः स्थिरासनः ॥ ३८ ॥ कषाय रहितः मोक्ष-पदाभिलाषुकः पुनः। तपः संयमरक्तश्च, स्थिर-
चित्तः प्रयुज्यते ॥ ३९ ॥ युग्मं ॥ पूर्वोक्त गुण हीनस्य, विराधकस्य कर्हिचित्। नरस्य सिद्धचक्रस्य, नाराधना
फलं भवेत् ॥ ४० ॥ यादृशे तादृशे देयो-ऽसावाम्नायो नराय न। यांति सर्वापदो नाशं, श्रीसिद्धचक्र सेवनात्
॥ ४१ ॥ आश्विन चैत्र शुक्लस्य, सप्तमीतश्च पूर्णिमां। यावदिदं तपः कार्यं, जिनार्चाचाम्ल पूर्वकं ॥ ४२ ॥ नवमे
दिवसे पंचा—मृतैर्महज्जिनार्चनं। सहर्ष सादरं कार्यं, विधि—विधान पूर्वकं ॥ ४३ ॥ नवपंक्तिभिरेकाशी—त्या-
चाम्लैर्जायते पुनः। सिद्धचक्रव्रतं पूर्णं, सार्द्धचतुष्कवत्सरैः ॥४४॥ कर्त्तव्यं तद्व्रतं वार—द्वयं वर्षप्रति पुनः। पूर्णे
सति व्रते तस्यो—द्यापनं च विधीयते ॥ ४५ ॥ मयैवं सिद्धचक्रस्या—राधनाया विधिः फलं। चादर्शि युवयोरग्रे,

पूर्वाम्नायानुसारतः ॥४६॥ अथाऽवदद्गुरुस्तत्र, स्थितान् श्राद्धान् परार्थिनः। श्रेष्ठ साधर्मिवात्सल्यं, भो ! श्रावका विधीयतां ॥४७॥ तत् श्रुत्वा श्रावकैर्दत्तं, दंपत्योश्च तयोर्गृहं। धनधान्यादि सम्पूर्णं, निवासाय मनोरमं ॥४८॥ तत्र तौ दंपतीकालं, सुखेन निन्यतुर्गुरोः। वाचा श्रीसिद्धचक्रस्या–र्चाभ्यासमूंबरोकरोत् ॥ ४९ ॥ अथ मदन-सुंदर्या, सहोंबरः शुभे क्षणे। आश्विन शुक्ल सप्तम्या, व्रतारंभं चकार च ॥ ५० ॥ तत्रैव मंदिरे तेन, मुनिचंद्र प्रतिष्ठितं। श्रीसिद्धचक्र यंत्रं च, स्थापितं विधि पूर्वकं ॥ ५१ ॥ ऋषभमंदिरे पूजा, प्रारब्धाष्ट प्रकारिका। आचाम्लविधि संयुक्ता, गुरूक्ताम्नाय पूर्वकं ॥ ५२ ॥ तदा मदन सुंदर्या, नित्यं स्नात्र जलं प्रभोः। श्रीसिद्ध-चक्र यंत्रस्य, भर्तृदेहे च सिंच्यते ॥ ५३ ॥ ततो दिने दिने तस्य, रोगस्योपशमोऽभवत्। चकारांत्यदिने सिद्ध-चक्र पूजां सुविस्तरात् ॥ ५४ ॥ ततः स्नात्र जलं भाव–पूर्वमादाय सिंचितं। तत्सवार्गं तया तेन, सरोगः सर्वथा गतः ॥५५॥ अथोंबरं सुरूपाढ्यं, रोग हीनं विलोक्य च। लोकानां महदाश्चर्यं, जातं तदाऽवदद्गुरुः ॥५६॥ भो ऽत्रजनाः ! किमाश्चर्यं, सिद्धचक्र प्रभावतः। शाकिनी डाकिनी भूत, ग्रहादेर्नभयं भवेत् ॥ ५७ ॥ पुनर्भयाष्टकं रोगा, वात-पित्त-कफोद्भवाः। नस्युस्तस्य प्रभावेन, वंध्यास्त्रीणां सुतोद्भवः ॥ ५८ ॥ यज्जगति दुराराध्यं, तच्च-

कार्यं प्रसिध्यति । मनोभिलषितं सर्वं, सिद्धचक्र प्रभावतः ॥ ५९ ॥ एवं गुरु मुखात् श्रुत्वा, तत्प्रभावं
विलोक्य च । प्रत्यक्षं हर्षमापुश्च, जाताऽत सादरा जनाः ॥ ६० ॥ ततो मदनसुंदर्या, गृहीत्वा तज्जलं पुनः ।
गत्वा सप्तशतकुष्टि, शरीरेषु प्रसिंचितं ॥ ६१ ॥ तैरपि भावपूर्वं हि, ज्ञातं तस्य प्रभावकं । ततस्तूर्णं हि तद्रोगा,
नष्टास्तज्जल सेचनात् ॥ ६२ ॥ ते सर्वे सुंदराकारा, जातास्ततो जनेऽभवत् । श्लाघा मदनसुंदर्या, महिमा गुरु-
धर्मयोः ॥ ६३ ॥ अथ पत्या समं भाव–पूर्वं मदनसुंदरी । नत्वा स्तुत्वा गुरुं चागात्, स्वस्थाने प्रीत मानसा
॥ ६४ ॥ अथान्यदोंवरः सार्द्धं, प्रियया जिनदर्शनं । कृत्वा स्तुत्वा च निर्गत्य, चैत्यात् याति गृहंप्रति ॥ ६५ ॥
तदा मार्गे स्व मातारं, दृष्ट्वोंवरोऽनमन्मुदा । तयाप्यालिंगनं तस्य, कृतं सोवक् प्रसूंप्रति ॥ ६६ ॥ मातर्वधूप्र-
सादेन, ते मे रोगोगतस्ततः । स्वश्वश्रूं सापि विज्ञाया–ऽपतत्तत्पादयोर्मुदा ॥ ६७ ॥ श्वश्रूर्ददौ तदाशीषं, त्वं
सोभाग्यवती भव । भव पुत्रवती भूया–दखंड युगलं हि वां ॥६८॥ ततस्त्रयोपि ते जग्मुः, स्वगृहेऽथ सुतोऽत्रदत्
गताऽसीः कुत्र मां मुक्त्वा, त्वं मातस्तन्निवेदय ॥ ६९ ॥ साऽहाऽहं वैद्यशुद्ध्यर्थं, कौशांबीं प्रगता मया । तस्य
शुद्धिःकृता तत्र, तीर्थयात्रां गतोस्ति सः ॥७०॥ तत्रैवाऽहं स्थिता चैत्य-दर्शनायैकदा गता । तत्र ज्ञानीमुनिः पृष्टो,

मया त्वद्रोग शांतये ॥ ७१ ॥ तदा तेन मुनींद्रेण, प्रोक्तं भद्रे स ते सुतः । त्वया चौज्जयिनीपुर्यां, कुष्टिगणेऽर्पि-
तोऽभवत् ॥ ७२ ॥ तेषां संगादभूत्सोपि, कुष्टरोगेन पीडितः । तैः कुष्टिभिर्निजस्वामी, कृतः कृत्वोंबराभिधं ॥७३॥
ते पुत्रो मालवाधीश, प्रजापत्याख्य भूपतेः । मदनसुंदरी पुत्री, परिणीतोस्ति सांप्रतं ॥७४॥ मुनिचंद्रगुरोर्वाचाः
राजसुतानुरोधतः । तेन तत्र कृतं सिद्ध-चक्राराधनमात्मना ॥७५॥ स तस्याराधनाद्रोग-रहितोऽभूत् गृहेऽर्पिते । सा-
धर्मिभिः स्थितः सार्द्धं, प्रियया सुखपूर्वकं ॥७६॥ वर्त्तते ते सुतोव्याप्यु-ज्जयिन्यां च ततो मुदा । मुनिं जिनं च नत्वाहं
कौशांबीत इहागता ॥ ७७ ॥ त्वं वधूसहितो मार्गे, मया दृष्टस्तदोंबरः । प्राह जिनालये मात, दर्शनार्थं प्रचल्य-
तां ॥ ७८ ॥ ततस्त्रयोपि निर्गत्य, स्वगेहाज्जिनदर्शनं । कृत्वा व्याख्यानमाकर्ण्य, पुनः स्वगृहमागताः ॥ ७९ ॥
ते च त्रयोप्यथान्येद्यु, विधाय जिनपूजनं । चंदनाद्यै र्वरस्तोत्रैः, कुर्वंति भाव पूजनं ॥ ८० ॥ इतश्च सहभूपेन-
कलहं रूपसुंदरी । कृत्वा भ्रातृगृहे गत्वा, शोकाकुला स्थितास्ति च ॥ ८१ ॥ कतिचिद्दिवसैः शोकं, त्यक्त्वाथ
रूपसुंदरी । ऋषभदेव चैत्येऽगात्, जिनेंद्र दर्शनाय च ॥८२॥ तत्र देव कुमाराभ, कुमारेण समं तदा । भाव-
स्तवं प्रकुर्वंती, दृष्टा निजसुता तया ॥ ८३ ॥ ततः स्वहृदये चैवं, चिंतयामास मेऽस्ति सा । मदनसुंदरी पुत्री,

काचित्कन्याऽथवाऽपरा ॥ ८४ ॥ इति स्वमानसे शंकां, कृत्वा सम्यग् विलोक्य तां । समुपलक्षिता पुत्री, तया-मदनसुंदरी ॥८५॥ तयाऽचिंत्यनया पुत्र्या, मे तं किं कुष्टिनं वरं । मुक्त्वा यमपरो कोपि, नवीनस्तु कृतः पतिः ॥ ८६ ॥ कर्मगतिर्विचित्राऽहो, संसारे किं किमत्र न । अकार्यं क्रियते जीवैः, दुष्कर्मप्रेरितैः खलु ॥ ८७ ॥ तं कुष्टिनं ध्रुवं त्यक्त्वा, तयाऽपरो वरः कृतः । विलोक्यते परं नास्ति, सा कुशीला च मत्सुता ॥ ८८ ॥ सा तु जिनमतज्ञाऽस्ति, सुशीला ज्ञायते ततः । जातं किमत्र कुष्टी स, वरः कुत्र गतोस्ति च ॥ ८९ ॥ इत्यादि बहु संकल्प, विकल्पं प्रगताऽरुदत् । विलक्ष वदना रूप-सुंदरी रूपसुंदरी ॥ ९० ॥ तदा मदनसुंदर्या, दृष्ट्वा शोकाकुलां प्रसूं । प्रोक्तं मातः कथं खेदः, स्थानेऽत्र क्रियते त्वया ॥ ९१ ॥ पित्राऽर्पितः स एवास्ति, मम कुष्टी वरः स च । नीरोगी सिद्धचक्रस्य, सेवा प्रभावतोऽभवत् ॥ ९२ ॥ कृत्वा भावस्तवं गत्वा, बहि स्थाने तवाऽखिलं । स्व वृत्तांतं वदिष्येऽथा-ऽह कुमार प्रसूश्च तां ॥ ९३ ॥ हे! संबंधिनि ते पुत्री, सती त्वत्कुक्षि संभवा । न चलति स्वमर्यादा-न्मेरुवन्निश्चलाशया ॥ ९४ ॥ तत् श्रुत्वा हर्षिता, रूप-सुंदर्यप्यखिलाश्च ते । जिनेंद्र वंदनं कृत्वा, जिनालयाद्बहिर्गताः ॥९५॥ तदा कुमार माताऽह, सहर्षां रूपसुंदरीं । गृहे युष्माभिरस्माकं, गम्यतां ते गता

गृहे ॥ ९६ ॥ तत्र मदनसुंदर्या, मातुरग्रे सविस्तरं। स्वरूपं कथितं सिद्ध—चक्रस्याराधनादिकं ॥ ९७ ॥ तत्-श्रुत्वा हर्षिता रूपा, कुमारजननीं प्रति। प्राह संबंधिनि ज्ञातं, स्वरूपमखिलं मया ॥ ९८ ॥ अधुना तु कृपां कृत्वा, यूयं युष्मत्कुलादिकं। वदथ यत उत्कंठा, तत् श्रवणे ममास्ति च ॥ ९९ ॥ इति द्वितीयः सर्गः ॥ २ ॥

## ॥ अथ तृतीयः सर्गः ॥ ३ ॥



अथ सा कमलाऽवादी—दंगदेशोऽभवत्पुरी। चंपाख्या तत्र भूमीशः, सिंहरथाभिधोऽभवत् ॥ १ ॥ तस्य राज्ञोऽभवत्पट्ट—राज्यहं कमलप्रभा। शीलगुणादि संयुक्ता, कुंकणेश सहोदरी ॥ २ ॥ देवाद्याराधनेनाभूद्—वृद्ध-त्वे चावयोः सुतः। तस्य 'श्रीपाल' इत्याख्या, कृता वाभ्यां शुभे क्षणे ॥ ३ ॥ द्विवार्षिके सुते तस्मिन्—जाते सिंहरथो नृपः। मत्पति स्तत्पिता शूला—न्मृतः कर्म नियोगतः ॥ ४ ॥ नृपवियोगतोत्यंतं, विलपंतीं जगाद मां। मतिसागर मंत्रीशो—मातः शोकं च मा कुरु ॥ ५ ॥ ते पुत्रोप्यधुना बालो—स्ति चेदाज्ञा भवेत्तव। स्थापयामि तदाऽहं तं, राज्ये तन्मानितं मया ॥ ६ ॥ मंत्र्यपि स्थापयित्वा मत्—पुत्रं राज्ये सुखेन तत। राज्यं वर्ष द्वयं यावत्, निष्कंटकमपालयत् ॥ ७ ॥ तदा श्रीपाल पितृव्यो, ऽजितसेनोऽति लोभतः। सर्वत्र राज्यभेदं हि, धनदानादि-

नाकरोत् ॥ ८ ॥ श्रीपालं मंत्रिणं मां च, स च हंतुमचिंतयत् । सर्वं तन्मंत्रिणा ज्ञात्वा–ऽऽगत्य मह्यं निवेदितं ॥ ९ ॥
ततोऽहं ससुता मंत्री, सायं काले त्रयोवयं । गुप्तवृत्त्या विनिर्गत्य, पुराद्वने पलायिताः ॥१०॥ रात्राववितस्ततस्तत्र,
भ्रमंती ससुता महत् । दुःखमनुभवंती च, प्रभाते पतिता ध्वनि ॥ ११ ॥ तदा सूर्योदये जाते, मे सप्तशत
कुष्टिनः । मिलितास्तान् विलोक्याऽहं, तत्र स्थिता भयाकुला ॥ १२ ॥ तदा तैः कुष्टिभिः प्रोक्तं, भद्रे ! त्वं मा
भयं कुरु । काऽसि त्वं च कुतश्चात्र, मार्गे समागतासि च ॥ १३ ॥ सर्वं कथय सत्यं त्व–मस्मद्भयं मनागपि । न
कर्त्तव्यं त्वया ते स्मो, भ्रातृ तुल्या वयं खलु ॥ १४ ॥ तन्मिष्टवचनं श्रुत्वा, विश्वस्तया मयाऽखिलं । कथितं निज
वृत्तांतं, तेषां च कुष्टिनां पुरः ॥ १५ ॥ तैस्तदाश्वासिता जाता, निश्चलाहमचिंतयत् । मयाधुना विनैतेषां,
मेऽन्यच्छरणमस्ति न ॥ १६ ॥ विचिंत्येति मयोक्तं हे ! कुष्टिनो यूयमावयोः । कुरुतऽनाथयो रक्षा–मजितसेन
भूपतेः ॥१७॥ तत् श्रुत्वा कुष्टिनां मध्या–दागत्यैकेन कुष्टिना । मम पुत्रं समादाय, स्थापितो वेसरोपरि ॥ १८ ॥
पटेनाच्छादितस्तैः सो–थ परावर्त्य वेषकं । अहं सुतं विधायांके तत्वेसरोपरि स्थिता ॥ १९ ॥ मया चिंतित-
मद्यापि, मे किंचित्पुन्यमस्ति च । येनेयं सर्वसामग्री, प्रादुर्भूतेदृशे वने ॥ २० ॥ मारमारेति कुर्वंतोऽ–जितसेनाश्व

वारकाः । तूर्णं तत्र समागत्य, पप्रच्छुः कुष्टिनं प्रति ॥ २१ ॥ भो ! काचित्सुंदराकारा, नृपराज्ञी सपुत्रका । दृष्टा-
युष्माभिरुक्तं तै, र्दृष्टास्माभिस्तु नैव सा ॥ २२ ॥ वयंतु प्रागुक्तकर्मा–नुभावात्स्मश्च कुष्टिनः । पार्श्वेस्माकं
भवद्भिश्च, समागंतुं न युज्यते ॥ २३ ॥ यतो ध्रुवं च युष्माकं, रोगोपत्ति र्भविष्याति । अस्माकं पवनेनापि,
तत्श्रुत्वा तै र्विचारितं ॥ २४ ॥ एते हि कुष्टिनः सत्यं, वदंतीति भविष्याति । रोगोस्माकममीषां च, संगान्नः
का गतिस्तदा ॥ २५ ॥ तत्क्षणे भूपति र्दूर–मस्मत्तोपि भविष्यति । किंचैते मिलिताः सर्वे, भिक्षार्थं यांति कुष्टिनः
॥ २६ ॥ इति विचार्य ते शीघ्रं, तत्स्थानात्प्रपलायिताः । अथाहं निर्भया तेषां, मध्ये स्थिता सुखेन च ॥ २७ ॥
अथ तैः कुष्टिभिः पुत्रो, मे निजनायकः कृतः । क्रमात्सयौवनं प्राप्तो–भूत् कुष्टरोग पीडितः ॥२८॥ बहवोप्यु-
पचाराश्च, मया कृतास्तथापि न । रोग शांतिरभूत्तस्य, ततः पृच्छाम्यहं जनान् ॥२९॥ एकदा केनचित्प्रोक्तं, नरेण
हे शुभे ! पुरि । कौशंब्यामेक वेद्योस्ति, कुष्टादि रोग हारकः ॥३०॥ तत्श्रुत्वाहं च कुष्टिभ्यः, सुतं समर्प्य तत्र च ।
गता परं स तीर्थस्य, यात्राकृते गतोस्ति च ॥ ३१ ॥ विषण्णाहं ततस्तत्र, मुनीश वचसा रुजः विनाशादिक
वृत्तांतं, निशम्याहमिहागता ॥ ३२ ॥ अत्राऽहं कमला युष्मत्पार्श्वे स्थितास्मि मे सुतः । श्रीपालोयं स्थितोस्त्यग्रे,

यो जामाता तवाऽजनि ॥ ३३ ॥ इति श्रुत्वा महानंदा, संजाता रूपसुंदरी । अगात् तूर्णं निजभ्रातृ, पुन्यपालस्य
सद्मनि ॥ ३४ ॥ सावग् मदनसुंदर्या, वार्त्तां भ्रातृपुरोऽखिलां । ततश्च सोपि हर्षेण, कुमारपार्श्वमागतः ॥ ३५ ॥
साग्रहं तेन चानीय, सकुटंवं कुमारकं । धनधान्यादि संपूर्णं, कुमारायार्पितं गृहं ॥ ३६ ॥ युग्मं ॥ तत्र नवपदाराध–
नादि सत्कर्म तत्परः । श्रीपालः सप्रिया मातो, वसतिस्म सुखेन च ॥ ३७ ॥ क्रीडार्थं घोटकारूढः, प्रजापाल-
नृपोन्यदा । श्रीपालावास पार्श्वस्थ, मार्गेणं याति सैन्ययुग् ॥ ३८ ॥ तदावास गवाक्षस्थां, दृष्ट्वा मदनसुंदरीं ।
श्रीपालेनसमं देव–कुमार तुल्य रूपिणा ॥ ३९ ॥ कामवशं गतेयं म–त्कुपुत्री कुष्टिनं वरं । त्यक्त्वान्यंकमपि
प्रोढं, चकार नूतनं पतिं ॥४०॥ युग्मं ॥ अतोधिग् मां मयाऽकारि, चायुक्तं प्रथमं ततः । अनयापि च कृतं प–श्चा-
दयुक्तं मत्कन्यया ॥४१॥ कलंको मत्कुलेदत्तो–ऽनयेत्युद्वेग संयुतः । प्रजापालस्तदैवाव–सरज्ञ पुन्यपालतः ॥ ४२ ॥
श्रुत्वा मदनसुंदर्या, वृत्तांतं हर्षितस्ततः । स समं पुन्यपालेन, मदनाया गृहेगतः ॥ ४३ ॥ युग्मं ॥ समं मदनसुंदर्या,
श्रीपालोपि विलोक्य च । आयांतं भूपमुत्थाया–ऽनमद्विनय पूर्वकं ॥४४॥ तद् दृष्ट्वा भूमिपालोप्य–ऽवादीद्धन्यासि
सुते: ! । त्वं त्वंहि कृतपुन्यासि, सर्वं सत्यं त्वया कृतं ॥ ४५ ॥ इत्यादि स्वसुताश्लाघां, चकाराऽथ जनैरपि ।

तस्याः श्लाघा कृतातीव, पुनरपि नृपोऽवदत् ॥ ४६ ॥ हे कन्ये ! कुलमुद्धृतं, मम त्वया तव प्रसूः । जाता समु-
ज्वला जैन–धर्मोपि द्योतितस्त्वया ॥४७॥ दत्तं दुःखं मया तुभ्यं, तत्त्वं क्षमस्व मेऽखिलं । अपराधं ततस्तातं, प्राह
मदनसुंदरी ॥ ४८ ॥ यूयं संप्रति हे तात ! मा खेदं कुरु मानसे । यतः कर्मगतिश्चेयं, दृश्यते जगतीतले ॥ ४९ ॥
स्व कृत कर्मणश्चेदं, ज्ञात्वा फलं करोम्यहं । शोचं न प्राग्भवे कर्म–कृतं जीवेन यादृशं ॥५०॥ तादृशमेव भुंक्ते
स–फलं ततश्च जंतुना । कर्त्ता हर्त्ताहमित्यादि, गर्वः कार्यः कदापि न ॥ ५१ ॥ प्राधान्यं कर्मणामेव, चित्तेधा-
र्यमतः परं । जिनोक्तमेवधर्मं त्वं, मन्यस्वाऽखिल सौख्यदं ॥५२॥ श्रुत्वेति नवतत्त्वेषु, जैनधर्मे नृपोरुचिं । धृतवान्
निर्मलं प्राप, सम्यक्त्वं भवनाशकं ॥५३॥ हे ! श्रीपालाऽथ धन्योहं, जामाता येन सद्गुणी । सिंहरथसुतो लब्धः,
कृत्वेत्यादि स्तुतिं नृपः ॥ ५४ ॥ अत्याग्रहेण चारोप्य, गजे मदनसुंदरीं । श्रीपालमनयद्राज–सभायां च महो-
त्सवात् ॥ ५५ ॥ युग्मं ॥ तत्र धवल मांगल्या–दि कृत्यं कृतवान्नृपः । श्रीपालस्य निवासाय, महामंदिरमर्पयत्
॥ ५६ ॥ परिवारयुत स्तत्राऽ–वसत्कुमारक स्तदा । श्रीजिनशासन श्लाघा, महत्याऽजानि भूतले ॥ ५७ ॥
अथान्यस्मिन् दिने हस्ति–रथाश्वसुभटादिभिः । परिवृतो वन क्रीडां, दृष्टुं श्रीपालको गतः ॥ ५८ ॥ देवकुमार-

कोयं राजा प्रयातीति,
वद् दृष्टः, श्रीपालो पुर्जने स्तदा। एको ग्राम्य नरः कश्चि—ल्लोकानां पुरतोऽवदत् ॥ ५९ ॥ कोयं राजा प्रयातीति,
प्रोक्तं पौरेरयं नृपः। न किंतु नृपजामाता, मदनसुंदरी पतिः ॥ ६० ॥ पौरोक्तं तद्वचः श्रुत्वा, विलक्षीभूय सद्मनि।
तूर्णमागत्य श्रीपाल, उदासीनतया स्थितः ॥ ६१॥ माताऽथ तादृशं पुत्रं, दृष्ट्वाऽवग् हे ! सुताद्य किं। कश्चिद्
व्याधिस्तनौ तेस्ति, तवाज्ञा केन खंडिता ॥ ६२ ॥ तव वा भार्यया प्रोक्तं, किमप्यद्य त्वमीदृशः। हेतुना केन
चिंतायुग्, विमनस्कः प्रदृश्यसे ॥ ६३ ॥ कुमारः प्राह हे ! मातः, त्वत्प्रोक्त कारणं न हि। चिंतात्वे मम किंत्वस्ति,
कारणमन्यदेव हि ॥ ६४॥ जननी प्राह हे ! वत्स, तर्हि तत्कारणं वद। त्वं यथा मे मनस्तापो, दूरीभवति शीघ्रतः
॥ ६५ ॥ कुमारः प्राह हे ! मात—रत्र मां स्वाभिधानतः। पितुर्नाम्नाऽथवा मातु—र्नाम्ना जानाति कोपि न ॥ ६६॥
किंतु श्वशूर नाम्नैव, मां जानाति जनोऽखिलः। अतो मे मानसे चास्ति, महद्दुःखं तदुद्भवं ॥ ६७ ॥ हेतुना तेन
हे ! मातः, स्थास्यामि नाऽत्र कर्हिचित्। माताऽह संति सत्यानि, ते वचनानि हे सुत ॥ ६८ ॥ इतः श्वशूर-
सेनां त्वं, लात्वा त्वत्पितृराज्यकं। लाह्यथाह कुमारश्च, भवदुक्तं न भाति मे ॥ ६९ ॥ यतो लोकेऽपवादो मे, तथा
करणत स्ततः। विदेशंप्रति गत्वाहं, निजभुजा बलेन च ॥७०॥ मेलयित्वा धनं सैन्यं, लास्यामि पितृराज्यकं।

अतो यास्याम्यहं मातः, परदेशमितोधुना ॥७१॥ युग्मं ॥ ततो मे तूर्णमेवाज्ञां, देहि प्राह प्रसूस्तदा । विदेशगमनं भो ! दु–ष्करं प्राह सुत स्तदा ॥७२॥ कातराणां नराणां हि, दुष्करं तद्विभाति च । मा दृशाणां नराणां त–त्सत्ववतां न दुष्करं ॥७३॥ ततो माताह ते सार्द्ध–मायास्यामि हे ! सुत । अहं मदनसुंदर्या, सार्द्धं ततः सुतोऽवदत् ॥७४॥ विदेशगमने स्त्रीणां, सार्थोऽर्थ विघ्न कारकः । सर्वदा स्यात्ततो मात–र्युष्माभिः स्थेयमत्र च ॥ ७५ ॥ मदनसुंदरी चाऽथ, विदेशगमनोत्सुकं । स्वपतिमवदत् कृत्वा, प्रांजलिं विनयान्विता ॥ ७६ ॥ स्वामिन्नहंतु युष्माकं, देहच्छायेव कर्हिचित् । वियोगं न सहिष्येऽत, आयास्यामि समं त्वया ॥ ७७ ॥ तत्श्रुत्वाह कुमारो हे ! प्रिये सत्यं वचस्तव । तथाप्येकाकिनः श्रेयो, विदेशगमनं मम ॥७८॥ अतस्त्वयात्र मे मातुः, सेवार्थं स्थेयमित्यतः । प्रसूदत्तशुभाशीष्कः, कृतप्रसूनमस्कृतिः ॥ ७९ ॥ सिद्धचक्रस्मृतिं कुर्वन्, सुशकुने शुभे क्षणे । स्त्री कृत तिलको हस्ते, धृत खड्गः सचाऽचलत् ॥ ८० ॥ नगर-पत्तन-ग्राम, पुर-खेडा-करादिषु । कुतूहलानि संपश्यन्, मृगेंद्र इव निर्भयः ॥ ८१ ॥ परिभ्रमन् क्रमादेक, गिरिपरिसर स्थितं । श्रीपालोऽपश्यदेकं च, मनोहरं सरोवरं ॥ ८२ ॥ तत्पाल्यां चंपकस्याधो, मंत्रध्यान परायणः । तेनोदासीनतापन्नो, दृष्टो विद्याधरो नरः ॥ ८३ ॥ श्रीपालः प्राह

कोऽसि त्वं, भो ! ऽत्रोदासीन भावयुग् । स्थितोऽस्ति सोवदज्ञो–सन्नर विद्याधरोस्म्यऽहं ॥८४॥ मत्पार्श्वे मद्गुरोः
प्राप्ता, विद्यैका वर्त्तते परं । प्रासिध्यति च सा विद्या, नोत्तर साधकं विना ॥ ८५ ॥ तेनाहं कारणेनोदा–सीन भा-
वत्वमागतः । श्रीपालः प्राह विद्येश, त्वं विषादं कुरुस्व मा ॥ ८६ ॥ विद्यायाः साधनेऽहं ते, भवाम्युत्तर
साधकः । ततस्त्वं निर्भयो भूत्वा, विद्यां सुखेन साधय ॥ ८७ ॥ तत्श्रुत्वा तेन हर्षेण, विद्यारब्धा प्रसाधितुं । सा
सिद्धाऽथ प्रतुष्टोभू–त्स्व विद्या सिद्धितः स च ॥ ८८ ॥ सोऽथ विद्याधरो हर्षा–त्कुमारायाग्रहाद्ददौ । जलनि-
स्तारिणी शस्त्र–निवारिण्यौषधि द्वयं ॥ ८९ ॥ पुनस्तेनोक्तमेतच्चौ–षधि द्वयं निधाय च । सुवर्ण रूप्य ताम्रा-
दि, यंत्रे वंध्याङ्गुजोपरि ॥ ९० ॥ श्रीपालोथ समं तेन, विद्याधरेण चाग्रतः । गच्छन् गिरेरधो भूमौ, ददर्श
धातु वादिनः ॥ ९१ ॥ ते हि विद्याधरं प्रोचुः, कृत्वास्मत्सुवरां कृपां । सुवर्णरस सिद्धे र्य, आम्नायो भवताऽ-
र्पितः ॥ ९२ ॥ विधिना तेन चास्माभि, र्भूरि यत्नः कृतः परं । सुवर्ण रससिद्धि र्न, जायतेथावदत् स तान्
॥ ९३ ॥ नरस्यास्य महाभाग्य–शालि नरोत्तमस्य च । उत्तरसाधकत्वेन, रससिद्धि र्भविष्यति ॥ ९४ ॥ सहा-
येनास्य मे विद्या, सिद्धिर्जाता निशम्य तत् । ते धातुवादिनः कृत्वा, श्रीपालोत्तर साधकं ॥ ९५ ॥ साधयितुं-

समारब्धा, रससिद्धिश्च तत्क्षणात् । सिद्धिंगता ततोत्यंतं, हर्षितैस्तैः प्रजल्पितं ॥ ९६ ॥ हे! सन्नर प्रसादात्ते, प्रयत्नः सफलोऽभवत् । अस्माकं त्वमतश्चेदं सर्वं हेमं गृहाण भोः ! ॥ ९७ ॥ कुमारः प्राह हे ! धातु–वादिनः मे विदेशिनः । नास्त्यनेन सुवर्णेन, किमपि च प्रयोजनं ॥९८॥ ते धातुवादिनश्चैकं, हेम खंडं महाग्रहात् । गुरु-भक्ति कृते तस्य, वस्त्रांचले बबंधिरे ॥ ९९ ॥ श्रीपालोथक्रमात्प्राप्तो, भृगुकच्छाभिधे पुरे । विक्रीय तत्सुवर्णं स–द्रव्य शस्त्रादिकं ललौ ॥१००॥ स त्रिधातु मये यंत्रे, संप्रक्षिप्यौषधि द्वयं । यंत्रं स्वभुजयो र्बध्वा, तत्र सुखेन तिष्ठति ॥ १ ॥ इति तृतीयः सर्गः समाप्तः ॥ ३ ॥

॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥ ४ ॥ ४ सर्गः

कोशंबी नगराच्चाथ, कुबेरवर्द्धनेश्वरः । अनेकैः किंकरै र्युक्तः, पोतपंचशतेश्वरः ॥ १ ॥ तत्र च धव-लश्रेष्ठी व्यापारार्थं समागतः । विक्रीय तेन चानीत, क्रयाणकानि तत्र च ॥ २ ॥ द्रव्यं कोटिमितं चार्ज्य, तत्रत्यान्य क्रयाणकैः । अमूल्यैः संभृताः पंच–शत पोताः पुनर्निजाः ॥ ३ ॥ त्रिभिर्विशेशकं ॥ धवलश्रेष्टिनो यान–पात्राणां वर्णनं यथा । एको जुंग्यभिधः षोड–श कूपस्तभशोभितः ॥ ४ ॥ एकशतं शफयाख्य, लधु

जुंग्यभिधाश्चतुः । अष्टोत्तरशतं वेडं, चतुरशीति द्रोणकाः ॥ ५ ॥ वेगडाख्याश्चतुः षष्टिः, क्षरप्राः पंचत्रिंशता । भिल्लाख्याश्चतुःपंचा–शत् पंचाशदावर्त्ताभिधाः ॥६॥ पोतं पंचशतं तस्यै–वं ज्ञेयं धवलेन च । दशसहस्र भृत्या-स्त–द्रक्षार्थं स्थापिता वराः ॥७॥ नृपाज्ञां धवलश्रेष्ठी, लात्वा प्राभृत पूर्वकं । उपाविशन्महापोते, शुभे दिने शुभे-क्षणे ॥८॥ ततः श्रेष्ठ्याज्ञया रत्न–द्वीपं गतुं च नाविकाः । पोतान् संप्रेरयामासु–स्तथापि ते चलंति न ॥९॥ तद्दृष्ट्वा व्याकुलः श्रेष्ठी, समुत्तीर्य स्वपोततः । नगरे पृष्टवान्सीको–तरीं तदावदच्च सा ॥१०॥ हे ! श्रेष्ठिन् स्तंभिताः पोताः, क्षुद्रदेव्या ततो यदि । यच्छसि बलिदानं त्वं, द्वात्रिंशल्लक्षणं नरं ॥११॥ तदा पोताश्चलिष्यंति, नान्यथेति सुरी वचः । श्रुत्वा स प्राभृतं लात्वा, तूर्णं नृपपुरोऽगमत् ॥ १२ ॥ तत्र स प्राभृतं मुक्त्वा, नत्वा वदन्नृपं प्रति । राजन् ! मे स्तंभिताः पोताः, क्षुद्रदेवतयाधुना ॥१३॥ अतस्तद्बलिदानार्थं द्वात्रिंशल्लक्षणो नरः । एको देयः कृपां कृत्वा, भवद्भिश्च ममोपरि ॥ १४ ॥ येन झटिति मे कार्य, सिद्धिः स्यात्तन्निशम्य च । तुष्टो राजावदच्चात्र, वैदेशी कोपि यो भवेत् ॥१५॥ बलिदानं त्वया तस्य, देव्यै देयं च नान्यथा । तत् श्रुत्वा हर्षितः श्रेष्ठी, निजावासं समागतः ॥१६॥ अथ च धवलश्रेष्ठी, भटान्समादिशन्नरं । द्वात्रिंशल्लक्षणोपेतं वैदेशिकं गवे-

समारब्धा, रससिद्धिश्च तत्क्षणात् । सिद्धिंगता ततोत्यंतं, हर्षितैस्तैः प्रजल्पितं ॥ ९६ ॥ हे! सन्नर प्रसादात्ते, प्रयत्नः सफलोऽभवत् । अस्माकं त्वमतश्चेदं सर्वं हेमं गृहाण भोः ! ॥ ९७ ॥ कुमारः प्राह हे ! धातु-वादिनः मे विदेशिनः । नास्त्यनेन सुवर्णेन, किमपि च प्रयोजनं ॥९८॥ ते धातुवादिनश्चैकं, हेम खंडं महाग्रहात् । गुरु-भक्ति कृते तस्य, वस्त्रांचले बबंधिरे ॥ ९९ ॥ श्रीपालोथक्रमात्प्राप्तो, भृगुकच्छाभिधे पुरे । विक्रीय तत्सुवर्णं स-द्वस्त्र शस्त्रादिकं ललौ ॥१००॥ स त्रिधातु मये यंत्रे, संप्रक्षिप्यौषधि द्वयं । यंत्रं स्वभुजयो र्बध्वा, तत्र सुखेन तिष्ठति ॥ १ ॥ इति तृतीयः सर्गः समाप्तः ॥ ३ ॥



॥ अथ चतुर्थः सर्गः प्रारभ्यते ॥ ४ ॥

कोशंबी नगराच्चाथ, कुबेरवद्धनेश्वरः । अनेकैः किंकरै र्युक्तः, पोतपंचशतेश्वरः ॥ १ ॥ तत्र च धव-लश्रेष्टी व्यापारार्थं समागतः । विक्रीय तेन चानीत, क्रयाणकानि तत्र च ॥ २ ॥ द्रव्यं कोटिमितं चार्ज्य, तत्रत्यान्य क्रयाणकैः । अमूल्यैः संभृताः पंच-शत पोताः पुनर्निजाः ॥ ३ ॥ त्रिभिर्विशेशकं ॥ धवलश्रेष्टिनो यान-पात्राणां वर्णनं यथा । एको जुंग्यभिधः षोड-श कूपस्तभशोभितः ॥ ४ ॥ एकशतं शफर्याख्य, लधु

वहंता रुधिरादिकं ॥ २९ ॥ कुमार कृत हुंकार, शद्वेनैव पलायिताः । कंपमानाश्च तद्दृष्ट्वा—भूदाश्चर्यं नृ-
मानसे ॥ ३० ॥ तदाथ श्रेष्ठिना चिंत्यऽ—यं किं विद्याधरोस्ति वा । किंन्नरो दानवो देव—स्तत्सम्यग् नावगम्यते
॥ ३१ ॥ किंचाहं तु वणिग् जाति—र्निजकार्य प्रसाधकः । तत एतेन सार्द्धं मे, वेरं कर्तुं न युज्यते ॥ ३२ ॥ अत
इदं मया कार्यं, वाच्यमस्य पुरोऽखिलं । विचार्येत्यपतत् श्रेष्ठी, श्रीपाल पाद पंकजे ॥३३॥ ततः प्रोवाच तं श्रेष्ठी,
हे ! वीर महतां भवेत् । कोपाग्निः केवलं नृणां, प्रणामावधिरेव च ॥ ३४ ॥ ततो ममापराधं हि, क्षांत्वा कृपां
विधाय च । देवी स्तंभित पोतान्मे, सिंधु गतान् प्रचालय ॥ ३५ ॥ मम कार्यमिदं कर्त्तुं, समर्थोसि त्वमेव
हि । अथ श्रेष्ठि वचः श्रुत्वा, श्रीपालः प्राह तं प्राति ॥ ३६ ॥ एतत्कार्यं कृते श्रेष्ठिन्, तव किं मम दास्यसि ।
श्रेष्ठी प्राह यदि त्वं मे, कार्यमेतत्करिष्यासि ॥ ३७ ॥ तर्हि तुभ्यमहं चैकं, लक्षं दास्येस्ततः समं । श्रीपालेन
स्व जुंग्याख्य—पोते सचारुरोह च ॥ ३८ ॥ वभूवुर्नाविकाः साव—धानास्तत कुमारकः । धृत्वा नवपदध्यानं,
सिंहनादं मुमोच हि ॥ ३९ ॥ तत्सिंहनाद भीतेव, सानष्टा क्षुद्रदेवता । सर्वे प्रचलिताः पोता—स्तद्दृष्ट्वा
धवलोऽमुदत् ॥ ४० ॥ वाजित्राण्यथ वाद्यंते, नृत्यं कुर्वंति नर्त्तकाः । भटा जयजयारावं, कुर्वंति हर्षिता जनाः ।

षितुं ॥ १७ ॥ श्रीपालो नगरे दृष्टो, भ्रमद्भिस्तैरितस्ततः । प्रोक्तं च भो ! समागच्छा–स्माभिः सहाथसोऽवदत् ॥ १८ ॥ कुत्रागच्छामि ते प्रोचु, र्धवलश्रेष्ठिनः पुरः । त्वमागच्छाथ तेनोक्तं, भो ! किं मेस्ति प्रयोजनं ॥ १९ ॥ तैरुक्तं श्रेष्ठिनस्तस्य, क्षुद्र देव्याश्च स्तंभिताः । पोतास्तस्यै तव श्रेष्ठी, बलिदानं प्रदास्यति ॥ २० ॥ श्रीपालस्तान्निशम्योचे, रे ! मूर्खा बलिदानकं । युष्मत्स्वामिनो दातुं, योग्यं च धवलस्य हि ॥२१॥ वीरस्य बलिदानं मे, दातुं कः समर्थवान् । एवं तेषां मिथस्तत्र, प्रभूतं कलहोऽभवत् ॥ २२ ॥ पश्चाद्भटैः समंतात्तैः, कुमारः परिवेष्टितः । तद्दृष्ट्वा स चकारोच्चैः, सिंहनादं भयावहं ॥ २३ ॥ तत्श्रुत्वा तद्भटाः सर्वे कंपमानाः पलायिताः । तदा श्रेष्ठी पुनर्भूप, पार्श्वाल्लात्वा महद्बलं ॥ २३ ॥ कुमार बंधनार्थं च, मुमोच तद्बलं तदा । कुमार सिंहनादात्त–द्दिशोदिशं पलायितं ॥ २५ ॥ युग्मं ॥ एकीभूय ततः शस्त्रै–र्नृप श्रेष्ठि बल द्वयं कुमारेण समं युद्धं प्रचकार भयावहं ॥ २६ ॥ श्रीपालंच्छादयामासु, र्भटाः शस्त्रैस्तथापि तं । शस्त्राणि सिद्धचक्रौष–धि प्रभावाल्लगंति न ॥२७॥ कुमारेण ततः केशाः, कस्यचित्कस्य नाशिका श्मश्रूणि कस्यचित्कस्यचिच्छिखादि च च्छेदितं ॥ २८ ॥ एवं पराभवं प्राप्ताः, केचिद्भटा दिशो दिशं । पलायिता मुखादिभ्यो

वहंता रुधिरादिकं ॥ २९ ॥ कुमार कृत हुंकार, शब्देनैव पलायिताः । कंपमानाश्च तद्दृष्ट्वा—भूदाश्चर्यं नृ-
मानसे ॥ ३० ॥ तदाथ श्रेष्ठिना चिंत्यऽ—यं किं विद्याधरोस्ति वा । किंन्नरो दानवो देव—स्तत्सम्यग् नावगम्यते
॥ ३१ ॥ किंचाहं तु वणिग् जाति—र्निजकार्य प्रसाधकः । तत एतेन सार्द्धं मे, वेरं कर्तुं न युज्यते ॥ ३२ ॥ अत
इदं मया कार्यं, वाच्यमस्य पुरोऽखिलं । विचार्येत्यपतत् श्रेष्ठी, श्रीपाल पाद पंकजे ॥३३॥ ततः प्रोवाच तं श्रेष्ठी,
हे ! वीर महतां भवेत् । कोपाग्निः केवलं नृणां, प्रणामावधिरेव च ॥ ३४ ॥ ततो ममापराधं हि, क्षांत्वा कृपां
विधाय च । देवी स्तंभित पोतान्मे, सिंधु गतान् प्रचालय ॥ ३५ ॥ मम कार्यमिदं कर्त्तुं, समर्थोसि त्वमेव
हि । अथ श्रेष्ठि वचः श्रुत्वा, श्रीपालः प्राह तं प्रति ॥ ३६ ॥ एतत्कार्यं कृते श्रेष्ठिन्, तव किं मम दास्यसि ।
श्रेष्ठी प्राह यदि त्वं मे, कार्यमेतत्करिष्यसि ॥ ३७ ॥ तर्हि तुभ्यमहं चेकं, लक्षं दास्येस्ततः समं । श्रीपालेन
स्व जुंग्याख्य—पोते सचारुरोह च ॥ ३८ ॥ वभूवुर्नाविकाः साव—धानास्तत कुमारकः । धृत्वा नवपद्ध्यानं,
सिंहनादं मुमोच हि ॥ ३९ ॥ तत्सिंहनाद भीतेव, सानष्टा क्षुद्रदेवता । सर्वे प्रचालिताः पोता—स्तद्दृष्ट्वा
धवलोऽमुदत् ॥ ४० ॥ वाजित्राण्यथ वाद्यंते, नृत्यं कुर्वंति नर्त्तकाः । भटा जयजयारावं, कुर्वंति हर्षिता जनाः ।

॥ ४१ ॥ श्रेष्ठिना लक्षदीनारं, तस्मै वित्तीर्य चिंतितं। यदि मया समं चाय–मागच्छेन्महानरः ॥ ४२ ॥ स तदैवंविधे कार्ये, कस्मिंचित् पतिते मम। भवेत्सहाय दातेति, विचार्य धवलोऽवदत् ॥४३॥ हे! कुमार गृहीत्वा त्वं, मत्तो मूल्यं मया समं। चलस्यथाह स श्रेष्ठिन्, त्वं मे मूल्यं ददासि किं ॥ ४४ ॥ धवलः प्राह मे संति, दशसहस्र सद्भटाः। वर्षे ददाम्यहं तेषां, सर्वेषां द्रव्य कोटिकं ॥ ४५ ॥ एवं सहस्र दीनारं, प्रत्येकं सुभटस्य च। वर्षैके जायते दास्ये–ऽहं ते तद्द्विगुणं पुनः ॥ ४६ ॥ कुमारः प्राह हे श्रेष्ठिन्!, यत्सर्व भट वेतनं। कोटिमितं भवेत्तच्च, त्वया मे यदि दीयते ॥ ४७ ॥ तदा त्वया सहायामि, पोतान् रक्षाम्यहं तव। नान्यथाथावदत्श्रेष्ठी, हे कुमार! नरोत्तम ॥ ४८ ॥ अस्म्यहं तु वणिग् जाति, स्ततः कथं प्रदीयते। एतावन्मूल्यमेकस्य, नरस्य वणिजा मया ॥ ४९ ॥ कुमारः प्राह हे श्रेष्ठिन्!, किंकरी भूय तेऽधुना। त्वया सहाहमिच्छामि, विदेश गमनाय न ॥ ५० ॥ किंतु देशाटनं कर्त्तु–मभिलाषोऽस्ति मे ततः। त्वं मत्तो भाटकं लात्वा, स्थानं पोते प्रदेहि मे ॥ ५१ ॥ तत् श्रुत्वा हर्षितः श्रेष्ठी, प्रोवाच हे नरोत्तम!। प्रतिमासं त्वयादेयं, दीनारैकशतं मम ॥ ५२ ॥ कुमार एकमासस्य, दत्वा भाटकमग्रतः। श्रेष्ठिनः पोतमध्ये स–त्स्थाने तस्थौ यथा सुखं ॥ ५३ ॥ अथ ते प्रेरिताः

पंच–शत पोताश्च नाविकैः । तेऽथ चेलुश्च वेगेना–नुकूल पवनेरिताः ॥ ५४ ॥ श्रीपालेन समं श्रेष्ठी, स्थाने स्थितः
कुतूहलं । सिंधो पश्यति मच्छादि, विविध जल चारिणाम् ॥५५॥ नरेण पंजर स्थेन, प्रोक्तं भो ! नाविका जनाः ।
भवनां जलकाष्ठादि, ग्रहणेच्छा भवेद्यादि ॥ ५६ ॥ तर्हि चागतमस्त्यत्र, बब्बराख्य कुलं तदा । समुदायैः समं
श्रेष्ठी, समुत्ततार पोततः ॥ ५७ ॥ तीरेन्येपि समुत्तीर्य, जलाद्यर्थं वने गताः । तेषां कोलाहलं श्रुत्वा, राजनराः
समागताः ॥ ५८ ॥ तैर्याचितः करः श्रेष्ठि, पार्श्वे परंतु नार्पितः । श्रेष्ठिना तत्करस्तेभ्यः, स्वसैन्य बलगर्विणा
॥ ५९ ॥ परस्परं ततस्तेषां, कलिर्जातश्च ताडिताः । ते धवलभटैस्तेऽथ, पुरेगत्वा वदन्नृपम् ॥ ६० ॥ हे राजन् !
धवल श्रेष्ठि, सुभटैस्ताडिता वयम् । तत् श्रुत्वा भूपतिः क्रुद्धः, ससैन्यस्तत्र चागतः ॥ ६१ ॥ धवल सुभटैः
सार्द्धं, रणं चकार भूपतिः । धवल सुभटाः प्राप्य, पराजयं पलायिताः ॥ ६२ ॥ तदा तं धवलं लात्वा, महाकाल
नृपाज्ञया । सैनिकाः पादपे वध्वा, पोतान् रुध्वा परिस्थिताः ॥ ६३ ॥ वलमानं नृपं पोते, स्थितान् राजनरान्
पुनः । वद्धं श्रेष्ठिनमालोक्य, श्रेष्ठि भटान् पलायितान् ॥ ६४ ॥ श्रीपालः प्राह पोतस्थः, श्रेष्ठिन् ते सुभटास्तव ।
कगता ये त्वया कोटि, दीनारेण प्रराक्षिताः ॥ ६५ ॥ युग्मं ॥ तत्श्रुत्वा धवलः प्राह, हे ! कुमाराधुना मम ।

त्वं तु क्षतोपरि क्षारं, कथं क्षपसि सोऽवदत् ॥ ६६ ॥ हे श्रेष्ठिन् ! किं गतं नास्ति, तेऽद्यापि संस्थितोस्म्यहं । महाकाल नृपं जीत्वा, गृहीतं येन वस्तु यत् ॥ ६७ ॥ पश्चात्तत्सर्वमस्मात्तेऽ–हं दापयामि तर्हि किं। त्वं मह्यं दास्यासि श्रुत्वा, तत् श्रेष्ठि प्राह तं प्रति ॥ ६८ ॥ मम सर्व धनस्यार्द्धं, तुभ्यं दास्येथसोवदत् । प्रमाणमत्र किं तेन–प्रोक्तं साक्ष्यत्र चेश्वरः ॥६९॥ संबद्धकवचोथ श्री–पालो लात्वा शरासनं। पोतादुत्तीर्य भूपस्य, पृष्टे गत्वा-वदन्नृपं ॥७०॥ कृत्वात्वमपराधं हे !, बब्बराधीश कातर । कगच्छसि ससैन्यो म–त्पार्श्वे चागच्छ शीघ्रतः ॥७१॥ यदि चेत्क्षत्रियोसि त्वं, तदा तूर्णं रणांगणे । समागत्य मयासर्द्धं, युद्धं त्वं कुरु हे नृप ! ॥ ७२ ॥ तत् श्रुत्वा बब्बराधीशो, हास्यं कृत्वावदच्च तं । भो ! त्वं चाद्यापि बालोसि, चैकोसि सुंदराकृतिः ॥७३॥ त्वं करोषि कुतो मृत्यु, वांच्छा किं जने सम । एकेन युद्ध विधानं, नास्ति कीर्त्ति यशो वहं ॥ ७४ ॥ मे क्षणादेव सेनायां, त्वं च चूर्णी भविष्यसि। त्वं गच्छाऽतो निजस्थानेऽ–थ श्रीपालो वदन्नृपं ॥७५॥ संग्राम भुवि हे भूप !, किं वागाडंबरेण च । यदि चेत्त्वं च शुरोसि, तर्ह्यागच्छाविलंबकं ॥ ७६ ॥ त्वं वृथा जल्प मेत्यादि, शौर्य युक्त वचांसि च । कुमारस्य निशम्योच्चैः, श्रुत्वा हृदि चमत्कृतः ॥७७॥ महाकाल नृपः क्रुद्ध, आदिष्टवान् स्व सैनिकान् । तेऽपि

कुद्धा वधार्थं हि, तत्सन्मुखं समाययुः ॥७८॥ तत्कालं सैनिकाः सर्वे, खड्ग-कुंत-शरादिभिः । शस्त्रैराच्छादयामासुः कुमारस्य शरीरकं ॥७९॥ तथापि सिद्धचक्रस्यौ-षधेश्च सत्प्रभावतः । कुमारस्य तनौ पीडां, संजाता न मनागपि ॥ ८० ॥ कुमारोथ महाकाल, सैनिकान् प्राह यत्कृतं । पराक्रमं भवद्भिस्तत्, सुष्ठु विलोकितं मया ॥८१॥ मे हस्तौ सांप्रतं यूयं, पश्यतेति निगद्य च । बाणौघैस्ताडयामास, महाकालेश सैनिकान् ॥ ८२ ॥ युग्मं ॥ पतंति तच्छाराघातैः, केचिद्भूमौ च सैनिकाः । केचिन्मृताः कुमारस्य, केचिच्छ रणमागताः ॥ ८३ ॥ एवं सेना विशीर्णा च, दिशोदिशं पलायिता । एवं स्व सैन्य भंगं त–त्कृतं नृपो विलोक्य च ॥ ८४ ॥ महाकाल नृपो हस्ति–स्कंधारूढः स्वयं द्रुतं । कुमारं प्रत्यधावच्च, क्रोधात्यरुण लोचनः ॥ ८५ ॥ युग्मं ॥ तदोच्छल्य कुमारेण, हस्तिस्कंधान्नृपं भुवि । पातयित्वा महीपालः, प्रबद्धो दृढबंधनै ॥८६॥ एवं निजनृपं बद्धं, दृष्ट्वा प्रवहणस्थिताः । पलायिता द्रुतं तस्या–रक्षका भयकंपिताः ॥८७॥ श्रीपालेन ततो दूरी, कृतानि बंधनानि च । धवलस्याथसोधावत्, खड्गंधृत्वा नृपं प्रति ॥ ८८ ॥ तं निवार्य कुमारेण, प्रोक्तं श्रेष्ठिन् गृहागताः । मार्यंते शरणायाताः, न दीन दुःखिनो नराः ॥ ८९ ॥ उक्तंच ॥ "गेहागयं च सरणागयं, बद्धं च रोगपरिभूयं । नस्संत बुढ बालयं च, न

त्वं तु क्षतोपरि क्षारं, कथं क्षपासि सोऽवदत् ॥ ६६ ॥ हे श्रेष्ठिन् ! किं गतं नास्ति, तेऽद्यापि संस्थितोस्म्यहं । महाकाल नृपं जीत्वा, गृहीतं येन वस्तु यत् ॥ ६७ ॥ पश्चात्तत्सर्वमस्मात्तेऽ–हं दापयामि तर्हि किं। त्वं मह्यं दास्यासि श्रुत्वा, तत् श्रेष्ठि प्राह तं प्रति ॥ ६८ ॥ मम सर्व धनस्यार्द्धं, तुभ्यं दास्येथसोवदत् । प्रमाणमत्र किं तेन–प्रोक्तं साक्ष्यत्र चेश्वरः ॥६९॥ संबद्धकवचोथ श्री–पालो लात्वा शरासनं। पोतादुत्तीर्य भूपस्य, पृष्टे गत्वा-वदन्नृपं ॥७०॥ कृत्वात्वमपराधं हे !, बब्बराधीश कातर । क्वगच्छसि ससेन्यो म–त्पार्श्वे चागच्छ शीघ्रतः ॥७१॥ यदि चेत्क्षत्रियोसि त्वं, तदा तूर्णं रणांगणे । समागत्य मयासर्द्धं, युद्धं त्वं कुरु हे नृप ! ॥ ७२ ॥ तत् श्रुत्वा बब्बराधीशो, हास्यं कृत्वावदच्च तं । भो ! त्वं चाद्यापि बालोसि, चैकोसि सुंदराकृतिः ॥७३॥ त्वं करोषि कुतो मृत्यु, वांच्छा किं जने सम । एकेन युद्ध विधानं, नास्ति कीर्त्ति यशो वहं ॥ ७४ ॥ मे क्षणादेव सेनायां, त्वं च चूर्णी भविष्यसि। त्वं गच्छाऽतो निजस्थानेऽ–थ श्रीपालो वदन्नृपं ॥७५॥ संग्राम भुवि हे भूप !, किं वागाडंबरेण च। यदि चेत्त्वं च शुरोसि, तर्ह्यागच्छाविलंबकं ॥ ७६ ॥ त्वं वृथा जल्प मेत्यादि, शौर्य युक्त वचांसि च । कुमारस्य निशम्योच्चैः, श्रुत्वा हृदि चमत्कृतः ॥७७॥ महाकाल नृपः क्रुद्ध, आदिष्टवान् स्व सैनिकान् । तेऽपि

हे राजन्! मे त्वमज्ञात, कुलादेः स्वसुतां कथं। ददास्यथ नृपोऽवादीत्, हे कुमार! कुलोत्तम ॥१०३॥ तव पराक्रमेणैव, ज्ञातं कुलादिकं मया। एवं नृपाग्रहं ज्ञात्वा, तत्स्वीचक्रे कुमारकः ॥ १०४ ॥ नृपेणाथ कुमारस्य, मदनसेनया समं। स्व पुत्र्या कारितं पाणि-ग्रहणं सुमहोत्सवात् ॥ १०५ ॥ ततो राज्ञार्पितं हस्त, मोचनावसरे बहु। धनादिकं कुमाराय, सत्पोतं नव नाटकं ॥ १०६ ॥ सिंधुतटे कुमारोथ, मदनसेनया समं। समाजगाम भूमीश, कृत महामहोत्सवात् ॥ १०७ ॥ ॥ इति चतुर्थ सर्गः समाप्तः ॥ ४ ॥

॥ अथ पंचम सर्गः प्रारभ्यते ॥ ५ ॥

धवलोऽथ कुमारस्य, नृपार्पितं धनादिकं। महाविभूतिमालोक्य, जज्वाल निजमानसे ॥१॥ पुनः सोऽचिंतयन्मत्तो-प्यस्यर्द्धिरधिकाऽभवत्। अकिंचनोप्ययं सार्द्धं, मयैकाकी समागतः ॥ २ ॥ पुनः स धनमेतावत्, प्राप्तवान् द्रव्यमर्द्धकं। मेपि मुधा ललौ चैवं, कुविकल्पान् करोति सः ॥ ३ ॥ अथ नृपः स्वकन्यायै, दत्वा शिक्षां प्रियोचितां। श्रीपालं स्नेहपूर्वं हि, संमील्य स्वपुरेऽगमत् ॥ ४ ॥ नाविकैः प्रेरिताः पोता-श्चेलुः सिंधौ क्रमाद्युः। रत्नद्वीपेथ पोतेभ्यः, सर्वे उत्तारिता जनाः ॥ ५ ॥ श्रीपालोपि तदोत्तीर्य, पोताद्रम्यं तटोपरि। कृत्वा

हणंति सयणपुरिसा ॥९०॥" तत्श्रुत्वा धवलः खड्गं, विमुच्य समुपाविशत् । ततः श्रेष्ठि भटाश्चापि, श्रेष्ठि पार्श्वं समागताः ॥ ९१ ॥ क्रोधाध्मातेन तान्दृष्ट्वा, धवल श्रेष्ठिना तदा । तेषामाजीविका भंगं, कृत्वा निष्काशिताश्च ते ॥ ९२ ॥ कुमारेण तदाश्वास्य, दीनाननान्निराश्रयान् । स्व सार्द्धद्विशती पोत, रक्षार्थं रक्षिताश्च ते ॥ ९३ ॥ तेपि हर्षेण संजाताः, श्रीपाल किंकरास्ततः । श्रीपालोपि महाकालं, विधाय मुक्त बंधनं ॥ ९४ ॥ स्वपोतानां करं दत्वा, तस्मै सत्कृत्य भूपतिं । वस्त्राभरण तांबूला–दिभिश्च विससर्ज तं ॥ ९५ ॥ युग्मं ॥ तदा नृपः कुमाराय, विज्ञप्तिं कृतवानिमां । हे सन्नर ! त्वमागत्य, मम सभां पवित्रय ॥९६॥ तदा च श्रेष्ठिना प्रोक्तं, हे कुमार ! रिपो गृहे । गंतव्यं सर्वथा नैव, कुमारोथाह तं प्रति ॥९७॥ हे श्रेष्ठिन् सांप्रतं चायं, महाकाल नृपो रिपुः । नास्त्यस्माकमभीतानां, किंत्वस्ति मित्रमेव नः ॥ ९८ ॥ तत्रातोगमने स्माकं, कोप्यपायो न विद्यते । निगद्यैवं सभूपेन, सहाचलत्पुरं प्रति ॥९९॥ नृपोमुदा कुमारं स्व–पुरे महामहोत्सवात् । प्रावेश्य स्थापयामास, स्व सभास्थवरासने ॥ १०० ॥ ततो विविध सत्कार, प्रतिपत्तिं विधाय सः । नृपो विज्ञपयामास, हे कुमारेंद्र ! सन्नर ॥१०१॥ एका मदनसेनाख्या, मे पुत्री वर्त्तते कुरु । त्वं पाणिग्रहणं तस्या–स्तत्श्रुत्वा सोवदन्नृपं ॥१०२॥

हे राजन् ! मे त्वमज्ञात, कुलादेः स्वसुतां कथं । ददास्यथ नृपोऽत्रादीत् , हे कुमार ! कुलोत्तम ॥१०३॥ तव पराक्रमेणैव, ज्ञातं कुलादिकं मया । एवं नृपाग्रहं ज्ञात्वा, तत्स्वीचक्रे कुमारकः ॥ १०४ ॥ नृपेणाथ कुमारस्य, मदनसेनया समं । स्व पुत्र्या कारितं पाणि–ग्रहणं सुमहोत्सवात् ॥ १०५ ॥ ततो राज्ञार्पितं हस्त, मोचनावसरे बहु । धनादिकं कुमाराय, सत्पोतं नव नाटकं ॥ १०६ ॥ सिंधुतटे कुमारोथ, मदनसेनया समं । समाजगाम भूमीश, कृत महामहोत्सवात् ॥ १०७ ॥ ॥ इति चतुर्थ सर्गः समाप्तः ॥ ४ ॥

॥ अथ पंचम सर्गः प्रारभ्यते ॥ ५ ॥

धवलोऽथ कुमारस्य, नृपार्पितं धनादिकं । महाविभूतिमालोक्य, जज्वाल निजमानसे ॥१॥ पुनः सोऽचिंतयन्मत्तो–प्यस्यर्द्धिरधिकाऽभवत् । अकिंचनोप्ययं सार्द्धं, मयैकाकी समागतः ॥ २ ॥ पुनः स धनमेतावत्, प्राप्तवान् द्रव्यमर्द्धकं । मेपि मुधा ललौ चैवं, कुविकल्पान् करोति सः ॥ ३ ॥ अथ नृपः स्वकन्यायै, दत्वा शिक्षां प्रियोचितां । श्रीपालं स्नेहपूर्वं हि, संमील्य स्वपुरेऽगमत् ॥ ४ ॥ नाविकैः प्रेरिताः पोता–श्चेलुः सिंधौ क्रमाद्गुः । रत्नद्वीपेथ पोतेभ्यः, सर्वे उत्तारिता जनाः ॥ ५ ॥ श्रीपालोपि तदोत्तीर्य, पोताद्रम्यं तटोपरि । कृत्वा

पटगृहं नृत्यं, पश्यन् तस्थौ स्त्रिया समं ॥ ६ ॥ इतश्च धवलश्रेष्ठी, समेत्याह कुमार भोः ! । त्वत्पोतस्थ क्रयाणं न, विक्रीयते कथं त्वया ॥ ७ ॥ सांप्रतमत्र तस्यास्ति, बहुमूल्यं निशम्य तत् । श्रीपालः प्राह हे श्रेष्ठिन् !, यन्ममास्ति क्रयाणकं ॥ ८ ॥ तत्सर्वं भवता विक्रि—तव्यं तथैव नूतनं । ग्राह्यं क्रयाणकं नात्र, पृष्टव्यं क्रय विक्रये ॥९॥ तत्श्रुत्वा हर्षितः श्रेष्ठी, प्राप्त दुग्ध विडालवत् । तत्क्रय विक्रयाद्भूरि, लाभं मम भविष्यति ॥१०॥ यतश्च सुखलीनोसौ, व्यवहारानभिज्ञवान् । क्रय विक्रय मूल्यादि, शुद्धिं नैव विधास्यति ॥ ११ ॥ अथ देव-कुमाराभोऽ—श्वारूढः कोपि मानवः । आजगाम कुमारस्य, वर पट्टकुटी गृहे ॥१२॥ प्रतिहारेण तस्मै च, तत्स्व-रूपं निवेदितं । कुमारः प्राह भो त्वं च, नरं प्रवेशयात्र तं ॥ १३ ॥ तदा स प्रतिहारोपि, तं समानीतवान्नरं । कुमाराग्रेऽथ तं नत्वा, सोपि तदग्रतः स्थितः ॥ १४ ॥ स कुमारस्य रूपादि, दृष्ट्वा चिंतितवान् हृदि । सुनिश्चि-तमयं कोपि, प्रभाविक नरोस्ति च ॥ १५ ॥ अस्याग्रे नृत्य संगीता—द्यऽखिल राजरीतिकं । वर्त्ततेऽतो ध्रुवं चायं, राजपुत्रः प्रदृश्यते ॥१६॥ नृत्ये पूर्णेसति प्राह, कुमारो हे नरोत्तम ! । कोऽसित्वं त्वं कुतः स्थाना—दागतस्तवनाम किं ॥ १७॥ किमपि चेत्त्वयाश्चर्यं, दृष्टं स्यात्तन्निवेदय । ततः श्रुत्वा सोऽवदद्भाग्य-शालिन् मद्वचनं शृणु ॥ १८॥

अस्मिंश्च वलयाकारे, रत्नद्वीपे विशोभितः। विविध शिखरैः रत्न–सान्वाख्य पर्वतोस्ति च ॥१९॥ तत्रास्ति नगरी रत्न–संचया तत्र भूपतिः। कनककेतु नामास्ति, विद्याधराधिपो महान् ॥ २० ॥ तस्य कनक मालाख्या, राज्ञी तत्कुक्षि संभवाः। चत्वारः संति तत्पुत्राः, राज तेजोविशोभिताः ॥ २१ ॥ कनकप्रभ नामास्ति, कनकशेखरस्ततः। कनकध्वज नामास्ति, कनकरुचि नामकः ॥ २२ ॥ तेषामुपरि तत्त्वज्ञा, रम्या सुशील शालिनी। एका मदनमंजूषा–भिधा सुतास्ति रूपिणी ॥ २३ ॥ तस्यां पुर्यां वसत्येको, जैनधर्म परायणः। जिनदेवाभिधः श्राद्धो, जिनदासोऽस्मि तत्सुतः ॥ २४ ॥ एकमपूर्वमाश्चर्यं, युष्मदग्रे वदाम्यहं। सावधानतया यूयं, तत्शृणुत नरोत्तम ॥ २५ ॥ रत्नसानु नगस्यास्य, शिखरोपरि संस्थितं। कनककेतु भूपस्य, पितामहेन कारितं ॥ २६ ॥ उन्नतमस्ति विस्तीर्णं, रत्नमयं मनोरमं। चैत्यं श्रीआदिनाथस्य, नानाशिखर शोभितं ॥ २७॥ युग्मं ॥ तत्र हेममयी मूर्त्तिः, श्री युगादि जिनेशितुः। रत्नद्वीपाधिपस्तस्याः, सेवां करोति सर्वदा ॥ २८ ॥ तस्य मदनमंजूषा, पुत्री परम भक्तितः। सर्वदा सविशेषं च, हर्षोल्लसित मानसा ॥ २९ ॥ सादरं जिनबिंबांग, रचनां च मनोरमां। अष्ट प्रकारिकां पूजां, करोति विधि पूर्वकं ॥ ३० ॥ युग्मं ॥ सा नृप पुत्र्यथान्येद्यु–स्तस्मिन् चैत्ये जिनार्चनं।

सा चकार ततो मूर्त्तेः शोभाऽभवन्मनोरमा ॥ ३१ ॥ एवं विधां जिनार्चां स्व–पुत्री कृतां मनोरमां । दृष्ट्वा विद्याधरेशोपि, स जहर्ष स्वमानसे ॥ ३२ ॥ व्यचिंतयत्स मे पुत्र्या, वरा जिनार्चना कृता । अत इयं ध्रुवं धन्या, कृतपुण्या स्थिराशया ॥ ३३ ॥ जिनभक्ति रता दक्षा, सुशीलास्ति ततो वरः । अस्यास्तत्सदृशः श्रेष्टो, यदि मम मिलिष्यति ॥ ३४ ॥ तदैव मे समाधानं, मानसे च भविष्यति । इति विचारयन् यावत्, शून्य भावं गतः क्षणं ॥ ३५ ॥ युग्मम् ॥ पुनर्मनसि सद्भावं, कृत्वा जिनेंद्र दर्शनं । भूपः स आगतो बाह्य, मंडपे रंग मंडपात् ॥३६॥ तदैव नृपपुत्री सा, पश्यंती जिन बिंबकं । मूलद्वाराद्विनिर्गत्य, चागता रंग मंडपे ॥ ३७॥ तत्क्षणादेव चैत्यस्य, मूलद्वार कपाटकौ । महच्छब्दं प्रकुर्वंतौ, झटिति मिलितौ समं ॥ ३८ ॥ तदाश्चर्यं विलोक्याथ, मिलिता अखिला जनाः । राज्ञापि तत्कपाटोद्घा–टनोपायाः कृता भृशं ॥ ३९ ॥ परं कथंचिदप्युद्घ–टितौ न तत्कपाटकौ । तदा नृपसुता चित्ते, पश्चात्तापं करोति सा ॥ ४० ॥ यन्मयाद्य जिनेशस्य, महत्याशातना कृता । येनाऽकार्यमिदंजातं, तत्कपाट पिधानकं ॥ ४१ ॥ एवं स्व हृदये पश्चा–त्तापं कृत्वा रुरोद सा । तदा मदन मंजूषां, भूपतिः प्राह हे सुते ! ॥४२॥ मा कुरु रुदनं त्वं ना–शातनेयं कृता त्वया । किंतु कृता

मयैवाशा–तना संसार वर्द्धिनी ॥ ४३ ॥ यतोऽद्यत्वत्कृतां दृष्ट्वा, जिनांग रचनांवरां । मया च शून्यभावेन,
वरचिंता कृता तव ॥ ४४ ॥ ततः प्रकुपिताधिष्ठा–तृ देव्यैवमिदं कृतं । ततश्चाद्यांतरायोऽभू–त्सर्वेषां प्रभु दर्शने
॥ ४५ ॥ अथ स भूपतिः पुत्र्या, परिवारैर्निजैः समं । उपवास त्रयं कृत्वा, स्थितस्तत्र शुभाशयः ॥ ४६ ॥
तृतीये दिवसे रात्रौ, पश्चिम प्रहरेऽभवत् । आकाशे देव वाणी च, सर्वैः श्रुता हि तद्यथा ॥४७॥ "नास्तिदोषोऽत्र
कन्याया, नरेन्द्रस्यापि नास्ति च । कपाटौ मुद्रितौ येन, कारणं तन्निशम्यतां" ॥ ४८ ॥ इत्याकाशोद्भवां
देव–वाणीं निशम्य हर्षिता । अभून्मदनमंजूषा, नृपोलोकाश्च हर्षिताः ॥ ४९ ॥ किंवदिष्यति देव्यग्रे–लोकेषु
चिंतयत्स्विति । देववाणी पुनर्जाता–काशे श्रुताखिलै र्यथा ॥५०॥ "दृष्टेपि यस्मिन् जिनमंदिरस्य, कपाटकुद्वं च
समुद्घटेत । स एव भर्त्ता नृपकन्यकाया, जानीत लोकाः किल देववाण्या" ॥ ५१ ॥ इति श्रुत्वा पुनर्लोक,
श्चिंतयामास हर्षितः । कस्येयं वाक् कदैवंच, भावीतो वाण्यऽभवत्पुनः ॥५२॥ "चेद्द्यहमादिदेवस्य, चक्रेश्वर्यस्मि
देवता । मासस्याभ्यंत्तरे चास्या, आनयिष्याम्यहं वरं" ॥ ५३ ॥ प्रभातेऽथ समुत्थाय, भूपतिः परिवार युक् ।
प्रहर्षितश्च संप्राप्तः, स्वावासे सुमहोत्सवात् ॥ ५४ ॥ तत्र जिनार्चनं कृत्वा, सर्वैश्च पारणं कृतं । देवसंबंधिनी-

वार्त्ते–य विस्तृताऽखिले पुरे ॥ ५५ ॥ स प्रमोदास्ततोलोका–स्तच्चैत्ये यांति नित्यशः । परंतु तत्कपाटौ द्वौ, केनाप्युद्घाटितौ न च ॥ ५६ ॥ चिंतयंति जनाः सर्वे, यः कोप्युद्घाटयिष्यति । कपाटौ भाग्यशाल्येव, विज्ञेयः स नरोत्तमः ॥५७॥ सांप्रतं किंचिदूनोस्ति, मासस्तथापि दिनद्वयं । तथैव जातमेवास्ति, महदाश्चर्य कारकं ॥५८॥ एवमुक्त्वा पुनः प्राह, जिनदासो नरोत्तम । त्वं तु द्वीपांतराद्द्य, समागतोसि भाग्यतः ॥ ५९ ॥ यदि चेत्तव हस्तेन, कार्यमिदं भवेत्तदा । सत्या चक्रेश्वरीदेवी, प्रोक्तावाणी भवेदियं ॥ ६० ॥ निशम्य जिनदासोक्तां, वाणीं स्थित्वा च घोटके । श्रीपालो धवलश्रेष्ठि, पार्श्वे गत्वा जगाद तं ॥६१॥ हे श्रेष्ठिन् ! जैनचैत्ये श्री–प्रभुदर्शनाय चल्यतां । तदा स प्राह मे प्रीति–र्व्यापार करणेस्ति च ॥ ६२ ॥ लभ्यते भोजनायापि, सम्यग्नावसरस्ततः । निरुद्यमाश्च यूयं हि, गच्छत जिनमंदिरे ॥ ६३ ॥ तत् श्रुत्वा जिनदासेन, परिवारैर्निजैः समं । श्रीपालः प्राचलद्रत्न–संचया नगरीं प्रति ॥ ६४ ॥ अथ सर्वेपि गच्छंतः, समागता जिनालये । श्रीपालोथावदल्लोकान्, परीक्षध्वं स्व भाग्यकं ॥ ६५ ॥ तदोक्तं तैर्विनासूर्य, कमलं नोद्घटत्यहो ! । तथापि स्पर्शितौ सर्वै–स्तत्कपाटौ प्रहर्षितैः ॥ ६६ ॥ परंत्वुद्घाटितौ तौ न, श्रीपालोथ सदाशयः । नैषेध्यादि विधिं कृत्वा, कपाटाग्रे समेत्य च

॥ ६७ ॥ चक्रे नवपदध्यानं, तत्क्षणाच्छद्ध पूर्वकं । उद्घटितौ कपाटौ तौ, तदानंदं जनेऽभवत् ॥ ६८ ॥ युग्मं ॥ श्री श्रीपालोथ कृत्वो श्री–जिनबिंबस्य विस्तरात् । अष्टप्रकारिकां पूजां, चकार चैत्यवंदनं ॥६९॥ तदा मदनमंजूषां, स्वपुत्रीसहितो नृपः । परिवारैः समं शीघ्रं, तत्र समागतो मुदा ॥ ७० ॥ महदाश्चर्य संयुक्तः, कुमारं पश्यतिस्म सः । कुमारोथ स्तुतिं चेवं–विधं चकार तद्यथा ॥ ७१ ॥

जय ! त्वं जगदानंद, जय ! त्वं जगदीश्वर ! । जय ! त्वं त्रिजगद्बंधो, जय त्वं त्रिजगत्प्रभो ॥ ७२ ॥ जय ! त्वं त्रिजगन्नेत्र, जय ! त्वं त्रिजगत्पते । जय ! त्वं त्रिजगन्नाथ, जय त्वं नाभिनंदन ॥७३॥ नमस्ते केवलालोक, लोकालोक विलोकिने । नमस्ते भुवनादित्य, भव्यां भोज विकाशिने ॥ ७४ ॥ नमस्ते सर्वतः सर्पन्मोह ध्वांत विनाशिने । नमस्ते विश्व विख्यात, सर्व नीति प्रकाशिने ॥ ७५ ॥ नमस्ते सर्व कल्याण, कारिणे क्लेश वारिणे । नमस्ते भक्तिमल्लोक, भव संताप हारिणे ॥ ७६ ॥ इत्यादिक स्तुतिं श्रुत्वा, श्रीपालेन कृतां समं । पुत्र्या जहर्ष भूपोपि, श्रीपालो बहिरागतः ॥ ७७ ॥ नृपं नत्वा स तत्पार्श्वे, स्थितस्तदा नृपोऽवदत् । हे भाग्यवन् ! कुलं ते किं, किं नाम त्वरितं वद ॥ ७८ ॥ श्रुत्वेति स्व मुखेनाहं, वच्मि स्वचरितं कथं । एवं याव-

रकुमारः स, चिंतयति स्वमानसे ॥७९॥ चारण मुनिराकाशा—त्तत्रैकस्तावदागतः । तं विलोक्याखिलालोकाः,
निजस्थानात्समुस्थिताः ॥८०॥ मुनिर्जिनालये गत्वा, जिनं नत्वा बहिः स्थितः । तं प्रणम्य यथास्थानं, तत्र राजा-
दयः स्थिताः ॥८१॥ तदा च मुनिना दत्ता, धार्मिक देशना यथा । जिनधर्मे च भो ! भव्या—स्त्रीणि तत्त्वानि संति
च ॥ ८२ ॥ देवतत्त्वं गुरुतत्त्वं, धर्मतत्त्वं च तत्र हि । देवतत्त्वस्य भेदौ द्वौ, चार्हत्सिद्ध पदद्वयं ॥ ८३ ॥ गुरुतत्त्वे
त्रयः संति, सूरि पाठक साधवः । धर्मतत्त्वस्य चत्वारः, भेदाः सद्दर्शनं पदं ॥ ८४ ॥ ज्ञानपदं च चारित्र, पदं
तपः पदं पुनः । एभिर्नवपदैः कृत्वा, सिद्धचक्रं भवेदिदं ॥८५॥ अस्य श्रीसिद्धचक्रस्य, ध्यानं राज्यकरं पुनः । अस्ति
मोक्षकरं कुष्टा—द्यखिलं रोगनाशकं ॥ ८६ ॥ अतोस्य सर्वदा ध्यानं, कार्यं निजार्थ सिद्धये । श्रीपाल इव तत्-
श्रुत्वा, नृपो जगाद हे गुरो ! ॥ ८७ ॥ कोसौ श्रीपाल भूमीशो, गुरुः प्राहाथ हे नृप ! । श्रीपालोयं स ते पार्श्वे,
स्थितोस्त्यथनृपोऽवदत् ॥ ८८ ॥ हे ! गुरोस्य चरित्रं हि, कथ्यतां गुरुणाप्यथ । कपाटोद्घाटनं याव—त्तद्वृत्तांतं
प्रकीर्त्तितं ॥ ८९ ॥ पुनः प्रोक्तं च भो राजन् !, सिद्धचक्र प्रभावतः । श्रीपालोग्रेप्ययं भावी, भूरिराजसुता पतिः
॥ ९० ॥ गृहिष्यति पितूराज्यं, क्रमात्प्रांते गमिष्यति । स स्वर्गे नवमे सिद्ध—चक्रस्य ध्यान तत्परः ॥ ९१ ॥

तत्श्र्युत्वा नरो देवो, नरो देवो नरः सुरः। नरो भूत्वा शिवं गंता, तस्य नवभवा अमी ॥ ९२ ॥ एवं श्रीपाल वृत्तांतं, मुनिमुखान्निशम्य च। नृपस्तेन कुमारेण, सार्द्धं निजगृहेऽगमत् ॥ ९३ ॥ तत्र विवाह सामग्रीं, कृत्वा नृपो महोत्सवात्। तेन सार्द्धं स्वपुत्र्याश्च, पाणिग्रहं चकार च ॥ ९४ ॥ श्रीपालाय तदा भूपो, दत्तवान्दासदासिकान्। मणि कनक रत्नाभू-षणाश्च गज किंकरान् ॥ ९५ ॥ प्रतिष्ठा महती जाता, श्रीपालस्याखिले पुरे। सोथ नृपार्पितावासे, द्वाभ्यां स्त्रीभ्यां सहावसत् ॥ ९६ ॥ नित्यं जिनालये पूजां, करोति प्रददाति सः। साधुभ्यो दानमेवं स-द्धर्म कार्यं करोति च ॥ ९७ ॥ श्रीपालेनाथ चैत्रस्य, शुक्ल सप्तमितोऽकरोत्। पूर्वोक्त विधिना सिद्ध-चक्र पूजां विशेषतः ॥ ९८ ॥ कृत्वा ह्वि नवमे पूजां, महतीं भावपूर्वकं। कृत्वा साधर्मि वात्सल्यं, सुखेन तत्र संस्थितः ॥ ९९ ॥ अथान्यस्मिन् दिने राजा, स श्रीपालः करोति सः। पूजां जिनालये चेतः, कोट्टपालः समागतः ॥ १००॥ स तं नत्वाह भो! राजन्, पोतागतेन पापिना। नरेणैकेन ते चाज्ञा, करभंगः कृतोस्ति च ॥ १०१॥ अत्र तं बंधनैर्बध्वा, नीतवानस्मि तं प्रति। भवदीयो यथादेशो, भवेत्तथा करोम्यहं ॥ १०२ ॥ तत् श्रुत्वाह नृपो यद्या-ज्ञाभंगस्तेन मे कृतः। स्यात्तदातस्य देयश्च, प्राणापहार दंडकः ॥ १०३ ॥ तदोक्तं दुर्गपालेन, हे

राजन् ! भवतां वचः । प्रमाणमस्तु तत्श्रुत्वा, श्रीपालः प्राह हे ! नृप ॥१०४॥ चैत्यस्थितैर्नरैः प्राणा—पहाराज्ञा कदापि न । देया तदा नृपोऽवक् ते, वचः सत्यं कुमार हे ! ॥१०५॥ ततो राज्ञा स्वपार्श्वे स, नरो विमुक्त बंधनः । कोटपालात्समानीतोऽ—थ श्रीपालो वदन्नृपं ॥ १०६ ॥ एष तु धवल श्रेष्ठी, मम पितृ समोस्ति च । अस्य सार्थे-हमप्यत्र, समागतोस्मि हे नृप ॥ १०७ ॥ ततो युक्तं विधातुं स—न्मानं युष्माभिरस्य च । ततो राज्ञापि वस्त्राद्यैः, स च सन्मानितो भृशं ॥ १०८ ॥ कुमारोथाह हे श्रेष्ठिन् !, राज करार्पणे कुरु । मा लोभं त्वं करं दत्वा, त्वं च स्थाने निजे व्रज ॥ १०९ ॥ तथेत्युक्त्वागतः सोथ, श्रेष्ठी गंतुं मनोऽकरोत् । स्वदेशं प्रति पोतेषु, भृत्वा क्रयाण-कानि च ॥ ११० ॥ तदा व्यापारिणैकेना—गत्यप्रोक्तं कुमार हे ! । धवलाद्यखिला लोकाः, स्वदेशं प्रति यांति च ॥ १११ ॥ युष्माभिरप्यतस्तत्रा—गंतव्यं तूर्णमेव च । सोथ ललौ नृपादेशं, गंतुं च द्विस्त्रिया समं ॥ ११२ ॥ कनककेतु भूपोपि, स्व सुतायै वितीर्य च । शिक्षां संभाष्य श्रीपालं, जगाम स्व पुरीं प्रति ॥ ११३ ॥ श्रीपालोपि समं स्त्रीभ्यां, ताभ्यां पोते निजे स्थितः । स्वपार्श्वे स्थापयामास, धवल श्रेष्ठिनं पुनः ॥११४॥ प्रवहणानि सर्वाणि, चेलुर्महति सागरे । पवन वेगतो देव—विमानानीव खाध्वनि ॥ ११५ ॥ इति पंचमः सर्गः समाप्तः ॥ ५ ॥

॥ अथ षष्टः सर्गः प्रारभ्यते ॥ ६ ॥

धवलोथ कुमारस्य, रमणीय प्रियाद्वयं। ऋद्धिविस्तारमालोक्य, जज्वाल निजमानसे ॥ १ ॥ पुनरहोय-मेकाकी, मत्संगेनागतोधुना । कीदृशोऽभूत्करोत्येवं, चिंतां सो हर्निशं भृशं ॥ २ ॥ निद्रापि तस्य नायाति, क्षुत्तृषाप्यगमत्तदा । तं प्रति वहति द्वेषं, तेन स दुर्बलोऽभवत् ॥ ३ ॥ क्षणं पतति शय्यायां, चोत्तिष्ठते तदा कथि । चतुर्भिस्तस्य मित्रै भों !-मित्र किं जायते तव ॥ ४ ॥ प्रतिदिनं शरीरं ते, किं क्षीयतेथवा तव । शारीर मानसी पीडा, काचिदस्ति च हे सखे ! ॥ ५ ॥ नः सत्यं वद किं तेऽभू-दथ स धवलोऽवदत् । भो ! सन्मित्राणि वो नोस्ति, प्रीतिः परं परागता ॥६॥ ततोहं भवतामग्रे, वच्मि मन्मानस स्थितं । अभिप्रायं परं वार्ता-प्रकाश्या नैव सा बहिः ॥ ७ ॥ श्रुत्वेति तद्वचस्तैः स्वी-कृतमथाऽवदत्स च । भो ! मित्राणि कुमारोय-मेकाक्येव नरोस्ति च ॥ ८ ॥ तस्याग्रे स्त्रीद्वयं चेदं, समृद्धिरियमस्ति च । सर्वं केनाप्युपायेना-स्माभिर्ग्राह्यं कुमारतः ॥ ९ ॥ यथा-स्माकं च सर्वेपा-मिष्ट सिद्धिर्भवेदतः । तस्य व्यापादनेस्माभिः, कर्त्तव्यः कोप्युपायकः ॥ १० ॥ तेषां मध्या-त्तदा चेको, दुष्टो मौनं स्थितः परे । त्रयो नरोत्तमाः प्रोचु-स्तं भो ! श्रेष्ठिन् वचः श्रृणु ॥ ११ ॥ परस्त्रीणां च

कस्यापि, धनादि हरणं सतां। न युक्तं सर्वथैवोप–कारिणां तु विशेषतः ॥ १२ ॥ तत्करणे महान् दोष–स्तत्फलमपि दारुणं। अस्ति प्राणि वधादीनां, चिंतनं नरकप्रदं ॥ १३ ॥ त्वं यद्येतादृशं घोरं, पापं च चिंत-यिष्यसि। श्रेष्ठिन् तदा तवावश्यं, व्यापादनं भविष्यति ॥ १४ ॥ श्रीपालोयं यतो धर्मी–दानी परोपकारकः। भाग्यवानस्ति चैतस्मिं–श्चेत्त्वं द्वेषं करिष्यसि ॥ १५ ॥ तदास्मात्जलधेः पारं दुष्करं ते भविष्यति। अस्योपरि भविष्यंति, चोपाया विफलाश्च ते ॥ १६ ॥ युग्मं ॥ अथैतस्याश्च वार्तायाः, कथनेन मनागपि। लज्जा न ते समुत्पन्नाऽ–तो धिग् त्वां हे जनाधम ॥ १७ ॥ अद्य प्रभृति चास्माभिः, सार्द्धं कार्यं त्वया न हि। भाषणमपि ते दृष्टे, मुखे लगत्यघं च नः ॥ १८ ॥ किं च ते चालिताः पोता–स्त्वं महाकाल रक्षितः। मरणाद्रक्षितो रत्न–द्वीपे तेन परार्थिना ॥ १९ ॥ अधुनैवोपकारास्त–त्कृताः किं विस्मृतास्त्वया। अस्मिन् कार्ये कृते नूनं, तवानिष्टं भविष्यति ॥ २० ॥ यदुक्तं–"अनाचारे मतिर्यस्य, स हंति जन्मनो द्वयं। दुर्गतिः परलोकेऽस्या–त्लोके चात्र-विडंबना॥ २१ ॥" अस्मिन् कर्मणि यः कोपि, सहायं कुमतिं च ते। ददाति तव शत्रुः स, विज्ञेतव्यस्त्वयापि च ॥२२॥ हे ! धवल विधेयं न, कदाप्यवं त्वयेदृशं। इत्याद्युक्त्वात्रयस्ते हि, स्वस्थाने सुहृदो गताः ॥२३॥ परंतु

कुमारेण समं निशि ॥ २४ ॥ एषामग्रे प्रकाश्या न,
धवलस्यास्य, हितकारि न तद्वचः । जातमथ तृतीयः कु–बुद्धि सखाऽवदत्स तं ॥ २४ ॥ एषामग्रे प्रकाश्या न,
गुप्ता वार्ता त्वया सखे ! । हे ! धवल त्रयोप्येते, भवतः संति शत्रवः ॥ २५ ॥ तदुपरि त्वया मित्र, बुद्धिर्धार्या
कदापि न । ते हितचिंतकोस्म्येक, एवाहं सुहृदुत्तमः ॥ २६ ॥ श्रेष्ठिन् ! कुरु मयोक्तं त्वं, श्रीपालेन सहाधुना ।
सद्वचनादिना बाह्यां, त्वं प्रीतिं प्रकटी करु ॥ २७ ॥ समुत्पाद्य विश्वासं, श्रीपाल मानसे ततः । हर्षितो धवलोऽ
वादीत्–हे मित्र ! हितचिंतक ॥ २८ ॥ तस्य व्यापादनोपायं, त्वं कथयाथ सोऽवदत् । पोतमंच्यां त्वया गम्यं,
कुमारेण समं निशि ॥ २९ ॥ तदैव च्छेदयिष्यामि, मंच्यादवरकानहं । शस्त्रेणाथावयोः सर्व–कार्य सिद्धि-
र्भविष्यति ॥ ३० ॥ कृत्वेवं गुप्तमंत्रं स्व–स्थाने दुष्टो गतः स च । धवलोथ समं तेन, बाह्यां प्रीतिं चकार हि
॥ ३१ ॥ भद्रकत्वात्कुमारस्य, विश्वासो धवलोपरि । महानभूत् समं तेन, भोजनादि करोति सः ॥ ३२ ॥
निश्यन्यदा कुमारं च, धवलो मंचिका स्थितः । जगाद भो ! कुमाराद्य, दृश्यतेऽधो च कौतुकं ॥ ३३ ॥ एवं
विधं मयाश्चर्यं, दृष्टं रम्यं कदापि न । अद्यापि दृश्यते तच्चेत, द्रष्टुमिच्छा त्वमेहि भोः ! ॥ ३४ ॥ तत्श्रुत्वा
तूर्णमागत्य, श्रीपालो मंचिकां गतः । धवलस्त्वगमत्पोत–मध्ये तूर्णं दुराशयः ॥ ३५ ॥ अधोमुखं विधायाथ,

श्रीपालोब्धौ च पश्यति । तावत् धवल मित्रेण, छेदिता मंचिका रज्जुः ॥ ३६ ॥ ततः सिंधौपतंश्चक्रे, नवपद
स्मृतिं स च । शीघ्रतः एव तत्रैको, मकरश्च समागतः ॥ ३७ ॥ तस्य पृष्ठे स्थिरीभूय, स कुंकण तटेऽगमत् ।
नवपदस्य नीरोत्ता–रिण्यौषधेः प्रभावतः ॥ ३८ ॥ ततो मकर पीठाच्चो–त्तीर्यागत्यावनी तले। वने चंपक वृक्षाधः,
सुष्वाप स सुखेन च ॥ ३९ ॥ यदा सो जागरत्स्वाग्रे, तदा पश्यद्भटान् स तैः । प्रोक्तं कुंकणदेशेत्र, प्रतिष्ठानपुरोस्ति
च ॥ ४० ॥ वसुपाल नृपस्तत्र, तेनादिष्टा वयं प्रभो ! । भो भटा ! अद्य नीरोक–स्तटस्थमस्ति काननं ॥ ४१ ॥
तत्रानपगतच्छाये, चंपकाख्य तरोस्तले । भवेद्यश्च नरः सुप्तो, यामे दिनस्य पश्चिमे ॥ ४२ ॥ अश्वोपरि
समारोप्या–नेतव्यः स नरोत्तमः । अथास्माभिर्नरोत्रैवं–विधो दृष्टस्त्वमेव च ॥ ४३ ॥ अतोस्मत्भूप पार्श्वे त्वं,
समागच्छ निशम्य तत् । श्रीपालोश्वं समारुह्य, तैः सुभटैः सहाऽचलत् ॥ ४४ ॥ प्रतिष्ठानपुरे राज्ञा–प्रवेशितो
महोत्सवात् । राजसभा स्थिते सिंहा–सने संस्थापितः स च ॥ ४५ ॥ ततो नृपोवदत्तं भो !, कुमार चैकदा मया ।
पृष्टो नैमित्तिको मेस्ति, मदनमंजरी सुता ॥ ४६ ॥ तस्याश्च को वरो भावी, तत्श्रुत्वा स निमित्तिकः । प्राह हे !
भूप वैशाख–शुक्लस्य दशमी दिने ॥ ४७ ॥ पश्चिमे प्रहरे सिंधु–तटे सुप्तो नरो भवेत् । यश्चानपगतच्छाये,

चंपकाख्य तरोस्तले ॥ ४८ ॥ स ते कन्या वरो भावी, साद्यास्ति दशमीतिथिः । जातं निमित्तिकोक्तं त–त्सर्वं
सत्यं कुमार हे ! ॥ ४९ ॥ त्रिभिर्विशेषकं ॥ मे ता मदनमंजर्याः, सुतायास्त्वं विधेहि च । पाणिग्रहणमाकर्ण्य,
तच्चसोंगी चकार तत् ॥ ५० ॥ भूपेनापि ततः पाणि–ग्रहणं कारितं तयोः । पुनर्दत्तं कुमाराय, भूरिरत्न
धनादिकं ॥ ५१ ॥ तत्र स्वभार्यया सार्द्धं, स्थितः स नृप मंदिरे । नृपोथाह कुमार त्वं, लाहि कंचित्पुरादिकं
॥ ५२ ॥ समयज्ञस्तदा राज्ञ–स्तांबूलदान कर्म सः । ल्लावितश्च कूटेन, रुदति धवलो भृशं ॥ ५३ ॥ स्व
शीर्षं स्फोटयत्युच्चै–रुरस्ताडयते स च । किं करोमि कगच्छामि, कस्याग्रे कथयाम्यहं ! ॥ ५४ ॥ अरे ! जना
ममस्वामी, श्रीपालः सागरेऽपतत् । तत्श्रुत्वाऽखिलपोतेषु, महाकोलाहलोऽभवत् ॥ ५५ ॥ श्रीपालस्य स्त्रियौ
श्रुत्वा, तद्विलापं प्रचक्रतुः । हा ! हा ! रवं प्रकुर्वंत्यौ, प्रमूर्च्छत्यौ पुनः पुनः ॥५६॥ हा ! प्राण नाथ हा ! स्वामिन्,
हा ! देव हा ! गुणालय । त्वं तु कुत्रगतो मृत्यु–र्नौ त्वया न कथं कृतं ॥ ५७॥ विलपंत्योस्तयोरेवं, सर्वरात्रिर्गता
तदा । तयोराश्वासनायागा–त्तत्र स धवलः कुधिः ॥ ५८ ॥ श्रीपाल कृते पूर्वं, दुःखं प्रदर्श्य सोऽवदत् । हे !
सुंदर्यौ युवाभ्यां मे–नोल्लंघ्याज्ञा कदापि च ॥ ५९ ॥ ततश्च युवयोः सौख्यं, भावीति तस्य मर्मभित् ।

वचो निशम्य विज्ञातं, ताभ्यां तीक्षण बुद्धितः ॥ ६० ॥ दुष्टेनानेन यत्सिंधौ, स्वपति पतनं कृतं । ततस्ताभ्यां
दृढीकृत्य, चित्तं त्यक्त्वा च रोदनं ॥ ६१ ॥ शीलरक्षार्थमिष्टस्य, देवस्य स्मरणं कृतं। इतश्चाब्धौ समुद्भूतो,
महोत्पातो भयं करः ॥६२॥ कल्पांत कालवद्वातै–रुच्छलति जलं बहु । महांतो जलकल्लोला, उच्छलंति भयं
कराः ॥ ६३ ॥ कल्पांत कालवन्मेघो, जलं वर्षंति गर्जंति । तडिन्मुहुर्मुहूरौद्रा, प्रादुर्भवति भीतिदा ॥ ६४ ॥
उच्छलल्लोलकल्लोला–कुलीभूतेषु च स्थिताः । लोकाः पोतेषु संक्षुब्धा–श्चक्रुः कोलाहलं महत् ॥६५॥ ते च स्वस्वे-
ष्टदेवानां, स्मरणं संव्यधुस्तदा। पोतजना विलोक्यैन–मुत्पातं च व्यचिंतयन् ॥६६॥ निश्चितमद्य पोतेशः,
श्रीपालः सिंधुपातितः । धवलेन महाघोरं, पापं कृतं च पापिना ॥६७॥ वयं कस्याथ पुण्येन, गच्छामः पारमंबुधेः ।
चक्रुः प्रकंपमानास्ते, दानपुण्यानि भूरिशः ॥ ६८ ॥ विस्तृत तमसा लोकाः, पश्यंति न परस्परं । त्रट् त्रट्
शब्दं प्रकुर्वंति, पोतस्तंभामिथो मिथः ॥ ६९ ॥ डमडमेति कुर्वंतं, डमरुं धारयन् करे । खड्गमन्यत्करे
क्षेत्र–पालश्च प्रकटीऽभवत् ॥ ७० ॥ मानभद्रस्ततः पूर्ण–भद्रः कपिल पिंगलौ । प्रकटिता इमे वीरा–श्चत्वारो
हस्त मुद्गराः ॥ ७१ ॥ ततः श्रीसिद्धचक्रस्य, कुमुदांजन वामनाः । पुष्पदंतश्च चत्वारः, प्रतिहाराः समागताः

॥ ७२ ॥ ततश्चक्रेश्वरीदेवी, चक्रं च बीभ्रती करे। स्वपरिवारसंयुक्ता, सहसा प्रकटीऽभवत् ॥ ७३ ॥ साह
भो ! क्षेत्रपाल त्वं, पूर्वं कुबुद्धिदं नरं। तं गृहाण गृहाणाशु, दवरकस्य कर्त्तकं ॥ ७४ ॥ ततस्तं बंधनैर्बध्वा-
धोमुखमवलंब्य च। कूपस्तंभे च संच्छेद्य, शांत्यर्थं वलिकं ददौ ॥ ७५ ॥ तत् दृष्ट्वा धवलोभीतो, नत्वा
प्रमदयोस्तयोः। पादेषु प्राह हे ! सत्यौ, मां रक्षतां च रक्षतां ॥ ७६ ॥ शरणं युवयोरेव, मेस्त्येवं तद्वचांसि
च। श्रुत्वा चक्रेश्वरी प्राह, रे ! पापिष्ठाधमाधम ॥ ७७ ॥ त्वयाधुनैतयोः सत्योः, स्वीकृतं शरणं ततः। त्वां च
मुंचामि जीवंतं, प्रोच्येवं धवलं प्रति ॥ ७८ ॥ वल्लभो वां महालक्ष्म्या, परिपूर्णो मिलिष्यति। मासस्याभ्यंतरे
वत्से !, खेदं न कुरुतां युवां ॥ ७९ ॥ इति चक्रेश्वरी वाचं, श्रुत्वा ते प्रमदे मुदा। विज्ञप्तिं चक्रतुर्देव्या, हे !
मात र्दुःख नाशिके ॥ ८० ॥ धवलादावयोर्न स्या-द्यथा भयं तथा कुरु। तदा तया तयोः कंठे-ऽम्लाने द्वे
स्थापिते स्रजौ ॥ ८१ ॥ वत्से चैतत्प्रभावेन, दुष्टोयं नैवं वां प्रति। द्रक्ष्यतीतिकथित्वा सा, परिवारैः समं ययौ
॥ ८२ ॥ सिंधौ पोतेषु सर्वत्र, शांतिश्च विस्तृताथ ते। त्रयोपि सन्नराः प्राहु-र्धर्मिष्ठा धवलं प्रति ॥ ८३ ॥
भो ! दृष्टं तव मित्रस्य, कुबुद्धिदायकस्य किं। जातं ततोभिलाषं ये, कुर्वंत्यन्य धनादिषु ॥ ८४ ॥ तेषामियं

गतिर्ज्ञेया, चैवंतैः शिक्षितोपि सः । न मानयत्यथ श्रेष्ठी, चिंतयत्यन्यदा पुनः ॥ ८५ ॥ ध्रुवमद्यापि मे पुण्य-मस्त्यन्यथेदृशं कथं । कष्टंनश्येत्ततो मे स्यात्, श्रीपाल स्त्री धनादिकं ॥ ८६ ॥ तदाहं शक्र तुल्यः स्यां, ततः प्रमदयोस्तयोः । वश्यार्थं कोप्युपायश्च, विधातव्योधुना मया ॥ ८७ ॥ सोथान्येद्युः स्त्रियो वेषं, कृत्वा पोतेऽगमत्तयोः । यावत्पार्श्वे तयोः सोऽगात्, कामग्रहेण पीडितः ॥ ८८ ॥ तावत्सोंधोभवद्देव—माला प्रभावतस्ततः । इतस्ततः पतन् ज्ञातः, श्रेष्ठी तत्किंकरी जनैः ॥ ८९ ॥ तैश्च स कुट्टितो नष्ट्वा, महाकष्टेन संययौ । स्वपोते-थागमन् पोता—स्ते कुंकणतटे क्रमात् ॥ ९० ॥ धवलोथ समुत्तीर्य, पोताल्लात्वा च प्राभृतं । राज्ञः पार्श्वेऽगमत्तत्र, श्रीपालं दृष्टवान् स्थितं ॥ ९१ ॥ सोथ श्याम मुखोजातः, चिंतयामास मानसे । कि मेष एव श्रीपालो, वान्यः कोप्यस्ति तत्समः ॥ ९२ ॥ श्रीपालेनापि स श्रेष्ठी, समुपलक्षित स्ततः । श्रीपालार्पित तांबूलं, लात्वा सोऽगमद्बहिः ॥ ९३ ॥ बहिःस्थ प्रतिहारं स, प्राह भो ! प्रतिहारक । राज्ञः पार्श्वस्थ तांबूल, दायको योस्ति कोस्ति सः ॥ ९४ ॥ कुमारस्य च तेनापि, वृत्तांतः कथितोऽखिलः । तत्श्रुत्वा धवलोदूनः, चिंतयामास चेतसि ॥ ९५ ॥ अहं करोमि यत्किंचित्, कार्यं भवति निष्फलं । तत्तथाप्यस्य कार्यश्च, मृत्यूपायो मयाधुना ॥ ९६ ॥ अत्रापि

नृप जामाता, जातोयं हन्यते कथं ? । किं करोमि ? क्व यामीति ?, चिंतयन् धवलोऽगमत् ॥ १७ ॥ इति षष्ठः सर्गः समाप्तः ॥ ६ ॥

॥ अथ सप्तमः सर्गः प्रारभ्यते ॥ ७ ॥

इतो डुंबाख्य जातीयै, र्गायकै र्धनलिप्सया । श्रेष्ठिपार्श्वे समागत्य, स्व कला दर्शिताऽखिला ॥ १ ॥ तदा च श्रेष्ठिना तेभ्यो, दत्तं स्तोकं धनं तदा । ते ज्ञात्वा श्रेष्ठिनश्चित्तं, व्याकुलं जगदुश्च तं ॥२॥ हे ! श्रेष्ठिन् वयमायाता, अत्र भूरि धनेच्छया । भवत्पार्श्वे तदा श्रेष्ठी, तान्प्रति प्राह भो नराः ! ॥ ३ ॥ यूयं विदेशिकाः स्थाथ—वेतत्पुर निवासिनः । तैरुक्तमथ हे ! श्रेष्ठिन्, सर्वे वैदेशिका वयं ॥ ४ ॥ तदोक्तं तेन केनाप्यु—पायेन च भो ! नराः । तं मारयत भूपस्य, जामातरं विदेशिकं ॥ ५ ॥ यदैतन्मम कार्यं हि, करिष्यथ तदा धनं । धनं दास्यामि युष्मद्भ्य—महं च मन ईप्सितं ॥ ६ ॥ परं व्यापादने तस्य, कमुपायं करिष्यथ । यूयं तंवदथ प्रोक्तं, तैर्डुंबै र्हे ! वणिग् वर ॥ ७ ॥ वयं जामातरं राज्ञ—स्तमस्माकं कुलोद्भवं । वदिष्यामोथ तं डुंबं, ज्ञात्वा स मारयिष्यति ॥ ८ ॥ श्रुत्वेति हर्षितोत्यंतं, श्रेष्ठी प्रोवाच भो नराः ! । सदुपायोस्ति युष्माकं, मह्यमपि स रोचते ॥ ९ ॥ किंच

मत्कुलपृच्छनेच्छास्ति, ते यदि त्वं तदा सृज । स्व सैन्यं तत्र संग्रामे, मत्कुलं प्रकटिष्यति ॥ ३५ ॥ सल्लज्जाकारकं नैव, मुखेन कुल वर्णनं । करिष्याम्यथवा पोते, मेऽतोऽधुनागते स्त्रियौ ॥३६॥ ते समानीय ताभ्यां मे, पृच्छनीयं कुलं त्वया । अथ धवलमाकार्य, राज्ञो पृष्टं च भो ! वणिग् ॥ ३७ ॥ कुमारस्यास्य पोते किं, स्त्रीद्वयं विद्यते न वा । श्रुत्वेति धवलो नैव, मनागप्युत्तरं ददौ ॥ ३८ ॥ तदा भूपाज्ञया पोते, गत्वा नरा इतस्ततः । तत्स्त्रीद्वयं गवेष्याशु, प्राहु हें ! प्रमदोत्तमे ॥ ३९ ॥ राज्ञा कुलादि पृच्छार्थं, स्व जामातु र्युवां निजे । पर्षदि च समाहूते, ततश्च तत्र ते गते ॥ ४० ॥ तदा राजापि संस्थाप्य, ते च यवनिकांतरे । पप्रच्छ हे ! सुतेऽस्त्येष, जामाता मत्सुता पतिः ॥ ४१ ॥ अस्य कुलादिकं वाच्यं, तत्श्रुत्वाऽखिलं वृतं । श्रीपालस्यावदद्विद्या-धरपुत्री च पर्षदि ॥ ४२ ॥ ततोऽयमावयोः स्वामी, वर्त्ततेथ निशम्य तत् । हर्षितो भूपतिः प्राह, मेस्त्ययं भगिनीसुतः ॥ ४३ ॥ मयास्मै मे सुतादायि, यत्तत्तु सर्वथा शुभं । जातमथ नृपस्तेभ्यो, मातंगे भ्योऽरुषद्भृशं ॥४४॥ तानाकार्य नृपोऽवादी-द्रे ! सत्यं कथ्यतामिदं । कूटाचरणमारब्धं, युष्माभिरधमं कथं ॥ ४५ ॥ तदा ते कंपमानाश्च, प्रोचुर्वितीर्य मुद्रिकां । पोतेश धवलेनेद-मस्मत्पार्श्वाच्च कारितं ॥४६॥ ततो धवलमाकार्याऽ-वादीन्द्रो !

दुर्गपालक। धवलं च समं डुंवे-रेतै र्यमालयं नय ॥ ४७ ॥ श्रुत्वेति करुणा युक्तः, कुमारोऽमोचयन्नृपात्।
धवलं तांश्च मातंगान्, नृपोथाह निमित्तिकं ॥ ४८ ॥ कथं त्वयापि मातंग, पतिरेष प्रजल्पितः। तेनोक्तं
सत्यमेवोक्तं, मया तु हे! नराधिप ॥४९॥ मातंगाः सामजास्तेषां, पति स्वामीति शब्दतः। अर्थतश्च कुमारोयं,
हस्तिपति र्भविष्यति ॥ ५० ॥ तत्श्रुत्वा हर्षितो भूप-स्तस्मै दत्वा धनादिकं। तं विसर्ज्य स्व कन्याया, बुद्धिं
दृष्ट्वा जहर्ष च ॥ ५१ ॥ पुनः भूपः कुमारं च, क्षमयामास सादरं। श्रीपालोप्यथ तत्रास्थात्, सार्द्धं पत्नीत्रयेण
च ॥ ५२ ॥ पुनः प्रीतिं कुमारश्च, धवलेन सहाऽकरोत्। निर्लज्जः कपटी तत्र, तिष्ठति धवलः सदा ॥ ५३ ॥
मारणार्थं कुमारस्य, छिद्रं पश्यन् सचैकदा। सुप्तं कुमारमालोक्यै-काकिनं सप्तमेभुवि ॥५४॥ तद्गृह पृष्टभागे
च, वध्वा दवरकं दृढं। गोधां सप्तमभूमौ च, चटाप्य धृतखड्गकः ॥ ५५ ॥ रौद्रध्यानपरो भित्त्यु-परि समा-
रुरोह च। अर्द्धमार्गे कुमारस्य, पुण्याद्दवरकोऽत्रुटत् ॥ ५६ ॥ त्रिभिर्विशेषकं ॥ ततः सधवलो भूमौ, पतित्वा
खड्ग विंधितः। कृष्णाख्य लेश्यया मृत्वा, सप्तमं नरकं ययौ ॥ ५७ ॥ प्रभातेथ जनास्तत्र, मिलिताश्च
ययौ तदा। कुमारोप्यभवल्लोके, कुमारस्य यशोमहत् ॥ ५८ ॥ धवलस्यापवादोऽभूत्, कुमारोथ विलोक्य तं।

यूयं यदेतन्मे, कार्यं पूर्णं करिष्यथ। तदाहमपि युष्मद्भ्यं, प्रदास्यामि धनंबहुं ॥ १० ॥ उक्त्वैवं तुष्टये तेषां, कोटिमूल्यां च मुद्रिकां। पूर्वं ददौ ततः कृत्वा, सामग्रीमखिलां च ते ॥ ११ ॥ रम्यवस्त्रादिकं धृत्वा, सकुटुंबाश्च पर्षदि। राज्ञः प्रदर्शयामासु, नृत्यादि स्व कलां वरां ॥ १२ ॥ युग्मं ॥ ततस्तुष्टो नृपः प्राह, भो! मातंगा स्व वांछितं। याचध्वं यूयमर्थं तत्–श्रुत्वोचुस्ते च हर्षिताः ॥ १३ ॥ हे नाथ! नास्ति चास्माकं, धनादिना प्रयोजनं। अस्ति केवलमस्माकं, मानस्यैव प्रयोजनं ॥ १४ ॥ राजाथ प्राह भो! डुंबा, कं मानमिच्छथाथ तैः। प्रोक्तं हे नृप! चास्मभ्यं, युष्मज्जामातृ हस्ततः ॥ १५ ॥ तांबूलं दापयाथांगी–कृत्य नृपोऽपि तद्वचः। अदापयच्च तांबूलं, तेभ्यः कुमार पार्श्वतः ॥ १६ ॥ युग्मं ॥ प्राक्कर्मविपाकेन, कुमारस्य तदाऽलगत्। कंठे गाढं जरत्यैका–रुदंतीचाह हे सुत! ॥ १७ ॥ कुत्र च प्रगतोभूस्त्वं, मिलितो बहुकालतः। हे पुत्र! प्रथमं देशे, मया त्वं सिंहले श्रुतः ॥ १८ ॥ ततस्त्वं चटितः पोते, ततोत्र त्वं समागतः। एषा तव वधूर्लंब–मान घुंघटिकास्थिता ॥ १९ ॥ त्वद्विरहोद्भवं भार्या–दुःखं किं न स्मृतं तव। त्वं तु भाग्यवशाज्जात–श्चात्र राजसुता पतिः ॥ २० ॥ परंत्वस्याः प्रियायास्ते, का च गतिर्भविष्यति। इतोन्या कापि मातंगी, कुमाराग्रे समेत्य च

॥ २१ ॥ हे ! भ्रात भ्रातरित्येवं, पूत्कुर्वती गलेऽलगत् । हे ! ज्येष्ठेति वदंत्येका—गत्य तस्य करेऽलगत् ॥ २२ ॥ श्वश्रूरस्यास्म्यहं चेति, प्रोक्त्वान्या तत्करे लगत् । हे ! भागिनेय हे ! भ्रात हे ! पौत्र ! पुत्र ! देवर ! ॥ २३ ॥ एवं संबंधिनो भूत्वा, सर्वे डुंबाः करादिषु । लग्नारुदंत्यतोऽकस्मा—त्कुमारो व्याकुलीऽभवत् ॥ २४ ॥ वृत्तांतमथ राज्ञेवं दृष्ट्वाऽ—नर्थो महानभूत् । जामात्रानेन डुंबेन, मम कुलं कलंकितं ॥ २५ ॥ अत एष प्रहंतव्यः, शीघ्र-मिति विचिंत्य च । निमित्तिकं समाकार्य, प्रोक्तमरे ! निमित्तिक ॥ २६ ॥ मातंगोयमिति प्राग् मे—त्वया कथं न जल्पितं । यतोनेन च डुंबेन, मे कुलादि कलंकितं ॥ २७ ॥ स प्राहायं न मातंगो, हे राजन् ! किंतु विद्यते । मातंगपतिरेवाय—मत्रार्थे नास्ति शंसयः ॥ २८ ॥ श्रुत्वेति भूपती रुष्टः, कुमारं च निमित्तिकं । द्वयमपि वधार्थं चा—दिष्टवान् सुभटान् प्रति ॥ ३० ॥ अथ मदनमंजर्या, विज्ञायैतत्स्वरूपकम् । पितुः पार्श्वे समागत्य, तूर्णं प्रोक्तं च तात हे ! ॥ ३१ ॥ किमिदं च त्वयाऽकार्यं, क्रियते चाविचारितम् । त्वया किंऽज्ञायते नास्या—ऽऽचारेणैवोत्तमं कुलं ॥ ३२ ॥ श्रुत्वेति भूपतिः प्राह, हे ! कुमार प्रकाशय । ममाग्रे स्व कुलं तूर्णं, श्रीपालोप्यवदत्तदा ॥ ३३ ॥ पूर्वं पीत्वाजलं पश्चा—द्गृहं पृच्छेदिति त्वया । सत्यी कृते यमुक्तिस्त्वं, पृच्छसि मेऽधुना कुलं ॥ ३४ ॥

मत्कुलपृच्छनेच्छास्ति, ते यदि त्वं तदा सृज। स्व सैन्यं तत्र संग्रामे, मत्कुलं प्रकटिष्यति ॥ ३५ ॥ सल्लज्जाकारकं नैव, मुखेन कुल वर्णनं। करिष्याम्यथवा पोते, मेऽतोऽधुनागते स्त्रियौ ॥३६॥ ते समानीय ताभ्यां मे, पृच्छनीयं कुलं त्वया। अथ धवलमाकार्य, राज्ञो पृष्टं च भो ! वणिग् ॥ ३७ ॥ कुमारस्यास्य पोते किं, स्त्रीद्वयं विद्यते न वा। श्रुत्वेति धवलो नैव, मनागप्युत्तरं ददौ ॥ ३८ ॥ तदा भूपाज्ञया पोते, गत्वा नरा इतस्ततः। तत्स्त्रीद्वयं गवेष्याशु, प्राहु हें ! प्रमदोत्तमे ॥ ३९ ॥ राज्ञा कुलादि पृच्छार्थं, स्व जामातु र्युवां निजे। पर्षदि च समाहूते, ततश्च तत्र ते गते ॥ ४० ॥ तदा राजापि संस्थाप्य, ते च यवनिकांतरे। पप्रच्छ हे ! सुतेऽस्त्येष, जामाता मत्सुता पतिः ॥ ४१ ॥ अस्य कुलादिकं वाच्यं, ततुश्रुत्वाऽखिलं वृतं। श्रीपालस्यावदद्विद्या—धरपुत्री च पर्षदि ॥ ४२ ॥ ततोऽयमावयोः स्वामी, वर्त्ततेथ निशम्य तत्। हर्षितो भूपतिः प्राह, मेस्त्ययं भगिनीसुतः ॥ ४३ ॥ मयास्मै मे सुतादायि, यत्तत्तु सर्वथा शुभं। जातमथ नृपस्तेभ्यो, मातंगे भ्योऽरुषद्भृशं ॥४४॥ तानाकार्य नृपोऽवादी—द्रे ! सत्यं कथ्यतामिदं। कूटाचरणमारब्धं, युष्माभिरधमं कथं ॥ ४५ ॥ तदा ते कंपमानाश्च, प्रोचुर्वितीर्य मुद्रिकां। पोतेश धवलेनेद—मस्मत्पार्श्वाच्च कारितं ॥४६॥ ततो धवलमाकार्याऽ—वादीद्रो !

दुर्गपालक । धवलं च समं डुंबै-रेते यमालयं नय ॥ ४७ ॥ श्रुत्वेति करुणा युक्तः, कुमारोऽमोचयन्नृपात् । धवलं तांश्च मातंगान्, नृपोथाह निमित्तिकं ॥ ४८ ॥ कथं त्वयापि मातंग, पतिरेष प्रजल्पितः । तेनोक्तं सत्यमेवोक्तं, मया तु हे ! नराधिप ॥४९॥ मातंगाः सामजास्तेषां, पति स्वामीति शब्दतः । अर्थतश्च कुमारोयं, हस्तिपति र्भविष्यति ॥ ५० ॥ तत्श्रुत्वा हर्षितो भूप-स्तस्मै दत्वा धनादिकं । तं विसर्ज्य स्व कन्याया, बुद्धिं दृष्ट्वा जहर्ष च ॥ ५१ ॥ पुनः भूपः कुमारं च, क्षमयामास सादरं । श्रीपालोप्यथ तत्रास्थात्, सार्द्धं पत्नीत्रयेण च ॥ ५२ ॥ पुनः प्रीतिं कुमारश्च, धवलेन सहाऽकरोत् । निर्लज्जः कपटी तत्र, तिष्ठति धवलः सदा ॥ ५३ ॥ मारणार्थं कुमारस्य, छिद्रं पश्यन् सचैकदा । सुप्तं कुमारमालोक्यै-काकिनं सप्तमेभुवि ॥५४॥ तद्गृह पृष्ठभागे च, बध्वा दवरकं दृढं । गोधां सप्तमभूमौ च, चटाप्य धृतखड्गकः ॥ ५५ ॥ रौद्रध्यानपरो भित्त्यु-परि समारुरोह च । अर्द्धमार्गे कुमारस्य, पुण्याद्दवरकोऽत्रुटत् ॥ ५६ ॥ त्रिभिर्विशेषकं ॥ ततः सधवलो भूमौ, पतित्वा खड्ग विंधितः । कृष्णाख्य लेश्यया मृत्वा, सप्तमं नरकं ययौ ॥ ५७ ॥ प्रभातेथ जनास्तत्र, मिलिताश्च ययौ तदा । कुमारोप्यभवल्लोके, कुमारस्य यशोमहत् ॥ ५८ ॥ धवलस्यापवादोऽभूत्, कुमारोथ विलोक्य तं ।

मृतं तन्मृतकार्यं च, कारयामास शोकयुक् ॥ ५९ ॥ कुमारोस्य समाहूय, तांस्त्रीन्सुमति दायकान् । पोतस्थान् वणिजः स्थानेऽ–स्थापयद्धवलस्य च ॥६०॥ पुनः स प्राह युष्माभि, र्धवलस्य धनादिकं । रक्षितव्यं निशम्येति, तैरपि च तथाकृतं ॥ ६१ ॥ श्रीपालोथैकदोद्याने, जगाम परिवारयुक् । तत्र च सार्थमद्राक्षी–देकमुत्तरितं महत् ॥ ६२ ॥ सार्थपतिः स्थितस्तत्रा–श्वारूढं च कुमारकं । विलोक्य प्राभृतं लात्वा, तस्य पार्श्वे समागतः ॥ ६३ ॥ कुमारः प्राह भो ! सार्थ–पते त्वमागतः कुतः । कुत्र गंतासि दृष्टं कि–माश्चर्यं तच्च कथ्यतां ॥६४॥ सोथाह हे ! कुमारेन्द्रा–गतः कांतिपुरादहं । कंबूद्वीपे च यास्याम्यै–कं दृष्टं कौतुकं मया ॥ ६५ ॥ श्रृणु च त्वमितस्स्थाना–च्छत योजन दूरकं । कुंडलपुरमस्त्येकं, पुरं धर्मिजनाकुलं ॥ ६६ ॥ मकरकेतुराट् तत्र, कर्पूर-तिलका प्रिया । तस्यास्ति च तयोः पुत्रौ, स्तः सुंदर-पुरंदरौ ॥६७॥ तयोरुपरि कन्यैका–स्ति गुणसुंदरी तया । प्रतिज्ञैवं कृता यो मां, वीणानादेण जेष्यति ॥ ६८ ॥ स मे भर्त्ता परः कोपि, नेति श्रुत्वा निरंतरं । वीणा-भ्यासं प्रकुर्वंत्य–नेकशो नृपनंदनाः ॥ ६९ ॥ मासे मासे परीक्षा च, तेषां प्रजायते परं । अद्यापि सा जिता नास्ति, केनापि पुरुषेण च ॥ ७० ॥ परीक्षा समये कन्या, सैकदा किन्नरीसमा । मया दृष्टास्ति योगः स्या-

स्कदाचिद्युवयोर्यदि ॥ ७१ ॥ तदा वरं निशम्यैतत्, श्रीपालः सार्थनायकं । संतोष्य वस्त्र तांबूलैः, संध्यायां गृहमागतः ॥ ७२ ॥ द्रष्टुकामस्तदाश्चर्यं, श्रीपालोथाभवन्निशि । लीनः श्रीसिद्धचक्रस्य, ध्याने सिद्धिदायिनः ॥ ७३ ॥ तदा श्रीसिद्धचक्राधि–ष्ठाता सौधर्म वासकः । श्रीविमलेश्वरो देवः, प्रादुर्भूयावदच्च तं ॥ ७४ ॥ "इच्छाकृतिर्व्योमगतिः कलासु, प्रौढिर्जयः सर्व विषापहारः । कंठःस्थितं यत्र भवत्य–वश्यं कुमारहारं तमिमं गृहाण ॥७५॥ एवंगुणान् प्रोच्य स सिद्धचक्रा--धिष्टायकः श्रीविमलेश देवः । कुमारकंठे विनिवेश्य हारं, जगाम धामा द्रुतमात्मधाम ॥ ७६ ॥" एवं श्रीसिद्धचक्रस्य, हारं प्राप्य प्रभावतः । निश्चितः सन् कुमारश्च, प्रसुप्तः प्रातरुत्थितः ॥७७॥ तदा तेन मनोऽकारि, कुंडलनगरेथ सः । तत्र प्राप्तः क्षणादेव, तद्धारस्य प्रभावतः ॥७८॥ तत्र तेन विनोदार्थं, कुब्जरूपं निजं कृतं । प्रविष्टः सन् पुरे दृष्टो, नागरैः स सकौतुकं ॥७९॥ ततो वीणा करै राज–कुमारैः सहसोऽगमत् । वीणाशास्त्र प्रवीणोपा–ध्याय पार्श्वेथ सोऽवदत् ॥ ८० ॥ मेऽपि वादयितुं वीणां, शिक्षस्व भो ! विशारद । तत्श्रुत्वा राजपुत्रास्ते, हसंतो जगदुश्च तं ॥ ८१ ॥ भो ! कुब्ज तव वीणाभ्या–सेन किं कार्य–माह सः । भवतां किंतदभ्यासे, कार्यं तथावदंश्च तं ॥ ८२ ॥ तदभ्यासं वयं कूर्मः, परिणेतुं नृपात्मजाम् ।

सोथ प्राह करिष्यामि, तदभ्यासं तदर्थकं ॥ ८३ ॥ तदा सर्वे हसित्वा ते, प्राहुर्नृपसुता अहो ! । राजसुतामह-
द्भाग्यं, सांप्रतं प्रकटीभवत् ॥ ८४ ॥ यत्सैनं वामनं नूनं, परिणेष्यति सोऽवदत् । यूयं पश्यंत एवाहं, परिणिष्ये
सुतां च तां ॥ ८५ ॥ इत्युक्त्वा पाठकायादा--दमूल्यं खड्गरत्नकं । तदा हृष्टः कलाचार्य--स्तस्मै वीणामदा-
द्वरां ॥ ८६ ॥ तदा कुब्जोपि तां वीणां, लग्नो वादयितुं पुनः । वादयतासता तेन, तां सर्व हास्य केलये ॥ ८७ ॥
तस्याः प्रत्रोटिता तंत्री, तुंबी प्रस्फोटिता पुनः । दंडिका कीलिका दूरी--कृता दंडश्च भंजितः ॥ ८८ ॥ युग्मम् ॥
तद् दृष्ट्वा हसयामासुः, कुमारास्तेऽट्ट हासतः । दान बलेन कुब्जोथ, वशी चकार पाठकं ॥ ८९ ॥ वीणाकला
परीक्षार्थं, कुमार्याथान्यदाखिलाः । कुमारास्ते समाहूताः, कुब्जोपि तत्र चागमत् ॥ ९० ॥ किन्तु तत्र सभायां
स, गच्छन् कुब्जो निषेधितः । प्रतिहारेण सोथादा--त्तस्मै च रत्नकुंडलं ॥ ९१ ॥ ततस्तेन सभायां स, प्रवेशि-
तोथ पश्यति । कन्या तन्मूलरूपं च, देववत्सुंदराकृतिं ॥ ९२ ॥ तं दृष्ट्वाथ कुमार्येदं, चिंतितं यदि मे भवेत् ।
महद्भाग्यं तदा यं हि, प्रतिज्ञां मम पूरयेत् ॥ ९३ ॥ अन्यः कोपि प्रतिज्ञा मे, नास्ति पूरयितुं क्षमः । अन्ये
जनाश्च पश्यंति, तं वामनं कदाकृतिं ॥ ९४ ॥ ततो वीणा कलाचार्यः, प्राह भो ! राज सूनवः । यूयं स्व-स्व

किंतु तेषां कला-
कलाभ्यासं, दर्शयतात्र पर्षदि ॥९५॥ तदा स्व-स्वकलाः सर्वैः, पृथग्-पृथग् प्रकाशिताः। किंतु तेषां कला-
भिश्च, कन्या मनो न रंजितं ॥९६॥ कुमार्याथ स्ववीणा च, प्रवादिता ततोऽखिलैः। प्रहर्षितैः जनैः कन्या,
वीणा कला प्रशंसिता ॥९७॥ तदा च वामनो रोषं, कृत्वाऽवादीज्जनोऽखिलः। कुंडलपुर वास्तव्यो, मूर्खो
विलोक्यतेतरां ॥९८॥ कन्या वादित वीणां च, प्रशंसंति वृथैव ते। तत्श्रुत्वा राज कन्याह, वामनं प्रति
भो नर! ॥९९॥ त्वयापि किं कृतो वीणा, कलाभ्यासेऽथ सोऽवदत्। मयाकृतोस्ति तत्सत्कः, सर्वोभ्यासः
स्व नामवत् ॥१००॥ तत्श्रुत्वा सा स्ववीणां तं, प्रत्यार्पयत्ततः स तां। लात्वाप्राह न शुद्धेयं, वीणा शुद्धा न
तंत्रिका ॥१०१॥ तुंबिका गलिता युक्तो, दंडो न नामकीलिका। शुद्धायुक्तास्तिनैयं च, ग्राममूर्च्छन नादतः
॥१०२॥ तयाथ कन्यया चिंति, निश्चितं मम भाग्यतः। नरो वीणाकलाभ्यासे, निपुणोयं समागतः ॥१०३॥
ततः कुब्जेन तां वीणां, विशुद्धी कृत्य वादिता। तन्नादेन जनाः सर्वे, मुमूर्च्छुः पर्षदि स्थिताः ॥१०४॥
प्रापुर्निद्रां ततस्कापि, केचिन्मुमावितस्ततः। लुठंति वामनेनाथ, केषांचित् रत्नमुद्रिका ॥१०५॥ कुंडलानि च
केषांचित्, केषांचित् कटकानि च। मुकुटानि च केषांचित्, केषांचिदुत्तरीयकं ॥१०६॥ गृहीत्वा प्रगुणीचक्रे,

कुमार्यपि ॥ १०७ ॥ त्रिभिर्विशेषकं ॥ कुमार्यपि सभामध्येथ तेऽखिलाः । गतमुच्छीः मुदंप्रापु–र्दृष्ट्वा स्ववस्तुसंचयं ॥ १०७ ॥ त्रिभिर्विशेषकं ॥ कुमार्यपि तदाश्चर्यं, पश्यंतीतस्य चाक्षिपत् । श्रीपालाख्य कुमारस्य, कंठे च वरमालिकां ॥१०८॥ तद्दृष्ट्वा भूपतिर्हा मे, पुत्र्यानया वरोवृतः । वामन इति यावच्च, चिंतां चकार मानसे ॥ १०९ ॥ तावत्कुब्जेन सत्यं च, स्वरूपं प्रकटीकृतं । तदा राजादयः सर्वे, सानंदा अभवन् भृशं ॥ ११० ॥ ततो राज्ञा मुदा पाणि–ग्रहणं कारितं तयोः । तत्र स गुणसुंदर्या, समं तस्थौ सुखेन च ॥ १११ ॥ इति सप्तमः सर्गः समाप्तः ॥ ७ ॥

॥ अथाष्टमः सर्गः प्रारभ्यते ॥ ८ ॥

श्रीपालोथान्यदोद्याने, क्रीडार्थंगतवांस्तदा । तत्रैकं पथिकं दृष्ट्वा, स तं प्रति प्राह भो ! पथिन् ॥ १ ॥ कस्मात्स्थानात्समायात–स्त्वमत्र कुत्र गच्छसि । त्वया दृष्टं किमाश्चर्यं, तदा स पथिकोऽवदत् ॥ २ ॥ युग्मं ॥ श्रेष्ठिधनावहेनाहं, श्रीकुंडल पुरात्पुरे । प्रतिष्ठाने च कस्मैचित्, कार्याय प्रेषितोस्मि च ॥३॥ मार्गे मयैकमाश्चर्यं, दृष्टं तत्श्रुणु विद्यते । कंचनाख्य पुरे वज्र–सेनराजा पराक्रमी ॥ ४ ॥ तस्य कनकमालाख्य, राज्ञी तयोश्चतुः सुताः । यशोधवल यशोधर, वज्रसिंह गंधर्वाः ॥ ५ ॥ तदुपर्यभवत्पुत्री त्रिलोकसुंदरी नृपः । तद्विवाहकृतेऽ-

कार्यी-स्त्वयंवरस्य मंडपं ॥ ६ ॥ तत्रागता नृपाः संति, नानादेशोद्भवा वरं । सा कन्याषाढकृष्णस्य, द्विती-
यायां वरिष्यति ॥ ७ ॥ सा द्वितीयातिथिश्चास्ति, प्रत्यूषेतत्पुरं पुनः । त्रिशत योजनं दूर-मस्मात्स्थानाच्च विद्यते
॥ ८ ॥ तत्श्रुत्वा हर्षितस्तस्मै, तुरंग स्वर्णभूषणं । दत्वा स्वयं कुमारः स्व-गृहं प्रति संमागतः ॥ ९ ॥ निशांते
कंचनद्रंगे, स कृत वामनाकृतिः । गत्वा प्रविशते याव-त्स्वयं वरस्य मंडपे ॥ १० ॥ स वेत्र धारिणा ताव-
न्निपिद्धोथ वितीर्य सः । सुवर्ण कंकणं तस्मै, प्राविशत्तत्रमंडपे ॥ ११ ॥ एक स्तंभस्थ पांचाल्याः, पार्श्वे स उपविष्ट-
वान् । पिंगल नयनं दीर्घं, दंतं चर्पटि नाशिकं ॥ १२ ॥ कृशोदरं प्रलंबोष्टं, कपिल केशपाशकं । श्यामं मुखेऽपतल्लालं,
महोच्च पृष्टभागकं ॥ १३ ॥ जीर्णततुं कुरूपं कु-लक्षणं वामनंप्रति । तत्र स्थिता हसंतस्ते, प्राहुर्नृप सुताम-
दात् ॥ १४ ॥ त्रिभिर्विशेषकं ॥ भो ! सुरूपिन् किमर्थंत्व-मत्रागतोथ सोऽवदत् । समागताः स्थ यूयं कि-मर्थ-
मत्राथ तेऽवदन् ॥ १५ ॥ वयं तु राजकन्यां तां, परिणेतुंस्म आगताः । कुब्जः प्राह तदर्थं हि, भो ! हमप्या-
गतोस्मि च ॥ १६ ॥ तत्श्रुत्वा राजपुत्रास्ते, हंसतोटट्ट शब्दतः । प्राहुरहो महारूपी, लावण्यवान् वरोसि भोः !
॥ १७ ॥ ततो नूनं च कन्या त्वां, मुक्त्वा नान्यं वरिष्यति । यतः क्वापि सुरूपी त्व-त्समो वरो न लभ्यते

॥ १८ ॥ एवं हास्य विनोदं ते, प्रकुर्वंति तदाऽगमत्। तत्र नृपसुता चारु, वेषा च शिबिकास्थिता ॥ १९ ॥ सा कन्या तु कुमारस्य, दृष्ट्वा रूपं स्वभाविकं। हर्षिताथ तयोश्चित्ते–भूत्प्रीतिः परस्परं ॥ २० ॥ अथ विज्ञात राजन्य, वृत्तांत प्रतिहारिणी। कुमारश्रेणि पार्श्वे ता–मानीय भूपतेः सुतां ॥ २१ ॥ सर्व राजकुमाराणां, रूप कुलादिकान् गुणान्। वर्णयंती क्रमात्सा च, कुब्जपार्श्वे समाययौ ॥ २२ ॥ युग्मं ॥ तदा हार प्रभावेन, स्तंभस्थ शालभंजिकां। प्रवेश्य देवता काचि–दित्थं वाणीं जगाद च ॥ २३ ॥ "यदि धन्यासि विज्ञासि जानासि च गुणांतरं। तदेनं वामनाकारं, वृणु वत्से नरोत्तमं ॥ २४ ॥" श्रुत्वेति राजकन्या च, कुब्जाकारस्य तस्य च। श्रीपालस्यैव कंठे च, चिक्षेप वरमालिकां ॥ २५ ॥ तद्दृष्ट्वा राजपुत्रास्ते, सर्वे प्रोचुश्च कुब्ज भो!। मुंच द्रुतमिमां मालां, त्वमन्यथा मरिष्यसि ॥ २६ ॥ कन्यात्वियं विमूढास्ति, यतस्तया नृपात्मजम्। त्यक्त्वा हंस समं कुब्जो, वृतोसि त्वं विरूपकः ॥ २७ ॥ कुब्जोथाह हसन् यूयं, कुरुध्वं मा रुषं मयि। नाशिका मल वद्युष्मान, त्यक्त्वेयं वरिता च मां ॥ २८ ॥ श्रुत्वेति कुपिताः सर्वे, ते कुब्जाद्वरमालिकां। लातुं ययुस्ततो भीमः, संग्रामोऽभूत्परस्परं ॥ २९ ॥ तदा तेन स्वहस्ताश्च, तेषां प्रदर्शितास्ततः। सर्वेपि राजपुत्रास्ते, दिशोदिशं

पलायिताः ॥ ३० ॥ देवैस्तदा कृता कुब्जो–परि कुसुम वृष्टिका। वज्रसेन नृपोद्राक्षी–स्स्वरूपं सकलं च तत् ॥ ३१ ॥ ततो गत्वा स कुब्जाग्रे, प्राह भो! सन्नर त्वया। यथा पराक्रमं युद्धे, भयंकरं प्रदर्शितं ॥ ३२ ॥ ते दर्शय स्वरूपं हि, तथा श्रुत्वेति सोऽकरोत्। रूपं स्वाभाविकं भूप–स्तदृष्ट्वाभूत्प्रहर्षितः ॥ ३३ ॥ कृत्वा तयोर्विवाहं स, श्रीपालाय गृहं ददौ। श्रीपालः सहकामिन्या, तया तत्र स्थितः सुखात् ॥ ३४ ॥ अथान्यदा चरः कोपि, श्रीपालस्य च पर्षदि। मिलितः प्राह हे! नाथा–स्ति पुरं दलपत्तनं ॥३५॥ धरापालनृपस्तत्र, गुणमाला-भिधा प्रिया। चतुरशीति राज्ञीषु, मुख्या तस्यास्ति वल्लभा ॥३६॥ तस्या हिरण्य गर्भश्च, रत्नगर्भो जगच्छशी। शिवचंद्रः पुनः कीर्त्ति–चंद्रः पंचसुता वराः ॥ ३७ ॥ तेषामुपरि चैकास्ति, शृंगारसुंदरी सुता। तस्याः संति पंचसख्यः, पंडिता च विचक्षणा ॥ ३८ ॥ प्रगुणा निपुणा दक्षा, प्रतिष्ठंत्यखिलाश्च ताः। नृपालये समावस्था, जिनमत विचक्षणाः ॥ ३९ ॥ युग्मं ॥ अथ शृंगारसुंदर्या, राजपुत्र्या तया समं। ताभिर्पंचसखीभिश्च, प्रतिज्ञैवं कृतास्ति च ॥ ४० ॥ यदस्माभिः समस्ताभि–र्जिनधर्मे रतो वरः। एकएव पतिः कार्यः, कपटादि विवर्जितः ॥ ४१ ॥ पुनरस्मत्कृताः पंच–समस्याः धर्म सूचिकाः। पूरयिष्यति यस्तं च, वरिष्यामो वयं खलु ॥४२॥

सर्वत्रैवं विधा वार्ता, विस्तृताथ निशम्यतत्। नानादेशोद्भवास्तत्र, मिलिताः संति पंडिताः ॥ ४३ ॥ बहुदेशोद्भवाभूप–पुत्राः कुर्वंत्यनेकशः। शास्त्राभ्यासं परं तासां, न ताः पूर्णीकृताश्च तैः ॥ ४४ ॥ श्रीपालस्तन्निशम्याशु, गत्वा हारप्रभावतः। शृंगारसुंदरी गेहां–गण स्थितासने स्थितः ॥ ४५ ॥ तदा पंचः सखीभिश्च, सार्द्धं राजसुता च तं। दृष्ट्वा प्रहर्षिता चैवं, चिंतयामास मानसे ॥ ४६ ॥ चेद्यदायं समस्या नः, पूरयिता तदा वयं। धन्याश्च कृत पुण्याश्च, भविष्यामोथ सोऽवदत् ॥ ४७ ॥ भो ! कन्या वः समस्या नां, तूर्णं पदानि जल्पथ। श्रुत्वेति राजपुत्र्या च, प्रेरिता पंडिताऽवदत् ॥ ४८ ॥ वांच्छाफलं चित्तगतं भवेच्च—

तत्समस्या पदं श्रुत्वा, कुमारेण विचारितं। अनया राजपुत्र्या त–त्सखीमुखेन जल्पितं ॥ ४९ ॥ ततः परमुखेनैतां, समस्यां पूरयाम्यहं। ततः पार्श्वस्थ पुत्तल्याः, शीर्षे स स्व करं ददौ ॥ ५० ॥ तदा पुत्तलिका प्राह–

ये सिद्धचक्रं परमं पवित्रं, ध्यायंति नित्यं निज मानसे हि।
तेषां नराणां च तथा च स्त्रीणां, वांच्छाफलं चित्तगतं भवेच्च ॥५१॥

ततो विचक्षणा प्राह—अन्यच्च लोकेऽत्र विलाप तुल्यं ॥ तदा पुत्तलिका प्राह—

देवो जिनेशश्च गुरुर्यथार्थ, वक्ता हि धर्मेषु दया प्रधानः ।
मंत्रेषु सारः परमेष्ठिमंत्रः, अन्यच्च लोकेऽत्र विलापतुल्यं ॥ ५२ ॥

ततश्च प्रगुणा प्राह—आत्मा हि येन सफलीभवेच्च ॥ तदा पुत्तलिका प्राह—

आराधय त्वं सुगुरुं सुदेवं, पात्रेषु दानं कुरु सत्सुसंगं ।
तीर्थेषु यात्रां च विधेहि नित्यं, आत्मा हि येन सफली भवेच्च ॥५३॥

ततश्च निपुणा प्राह—यावद्विधात्रा लिखितं ललाटे ॥ तदा पुत्तलिका प्राह—

रे चित्त ! खेदं परिमुंच नित्यं, चिंता समूहे न कुरु स्व जीवं ।
फलं भवेदत्र परत्र ताव–द्यावद्विधात्रा लिखितं ललाटे ॥ ५४ ॥

ततो वदति दक्षा च—तस्यैव दासाश्च त्रिलोक लोकाः ॥ तदा पुत्तलिका प्राह—

यत्संचितं पूर्व भवे भवेच्च, तेनैव पुण्येन भवंति कामाः ।
भोगाश्च राज्यानि शिवेष्ट सौख्यं, तस्यैव दासाश्च त्रिलोक लोकाः ॥५५॥

अथ समं सखीभिश्च, ज्ञात्वा शृंगारसुंदरी । समस्या पूरणं चित्त–गतं च भाव सूचकं ॥ ५६ ॥ वरमालां कुमारस्य, कंठेऽक्षिपन्नृपोप्यथ । जहर्ष तत्समस्यायाः, पूरणमवगत्य च ॥ ५७ ॥ ततो राजा कुमारेण, समं तासां विवाहकं । चकाराथ कुमारोपि, तत्र तस्थौ प्रियायुतः ॥ ५८ ॥ अथान्येद्युः समागत्य, कोपि भट्टो जगाद तं । भो ! कुमारास्ति कोल्लागे–पुरे पुरंदराख्य राट् ॥ ५९ ॥ तस्यास्ति विजयाराज्ञी, तस्याश्च हरिविक्रमः । नरविक्रम हर्यादि, सेनादि सप्तपुत्रकाः ॥ ६० ॥ तदुपरि सुतास्त्येका, तस्याश्च जयसुंदरी । कन्योपाध्याय पार्श्वात्सा, पपाठ सकलाः कलाः ॥६१॥ राजाथ स्व सुतां दृष्ट्वा, तद्वरार्थमचिंतयत् । तदा निवेदितं कन्याभिप्रायं पाठकेन च ॥ ६२ ॥ हे ! भूपायं भवत्कन्या–भिप्रायः साधयिष्यति । राधावेधं च यः कोपि, स वरो मम नापरः ॥ ६३ ॥ चक्रे नृपोथ रंगादि, सामग्रीं तत्र मंडपे । उद्ध्वीं कृतो महत्स्तंभ–स्तदग्रे चक्र काष्टकं ॥ ६४ ॥ वाम प्रदाक्षिणा-वर्त्त, भ्राम्यद्यंत्र प्रयोगतः । तस्याप्युपर्यधो वक्त्रा, स्थापिता काष्ट पुत्तली ॥६५॥ अधस्तैल भृतं कुंडं, तत्राधो वर्त्ति दृष्टिना । उद्ध्वं संहित बाणेन, सा विंध्या वाम चक्षुषि ॥६६॥ त्रिभिर्विशेषकं ॥ केनाप्येवंविधोराधा–वेधोऽद्या पि न साधितः । अस्ति श्रुत्वेति तस्मै च, कुमारः कुंडलं ददौ ॥ ६७ ॥ अथाकाशाध्वना राधा–वेध स्थाने स

॥ ६८ ॥ तदा तत्र कुमारेण, राधावेधः प्रसाधितः । तदा
चागमत् । तत्साधनाय तत्र च; मिलिता बहवो जनाः ॥ ६८ ॥ तदा तत्र कुमारेण, राधावेधः प्रसाधितः । तदा
कन्या कुमारस्य, कंठे चिक्षेप मालिकां ॥ ६९ ॥ प्रमुदितेन राज्ञाथ, विवाहश्च तयोः कृतः । महोत्सवेन तत्राथ
प्रियायुक्तः स तिष्ठति ॥ ७० ॥ इतो मातुल भूपोऽस्य, तं कुमारमकारयत् । ततः सोपि स्व भार्यांश्चा–नयितुं
प्रेपिता भटाः ॥ ७१ ॥ तेऽपि ताभिः समं स्त्रीभिः, स वंधुभिः समागताः । सोथ समं प्रिया सेन्यैः, प्रतिष्ठान पुरं
गतः ॥ ७२ ॥ तन्मातुल नृपेणापि, नाना देश नृपार्चितः । श्रीपालः स्थापितो राज्ये, राज्यचिन्हादि पूर्वकं
॥ ७३ ॥ अथागणित सेनाभिः, सार्द्धं निज प्रियायुतः । स्व मातृ मिलनार्थं सोऽ–चालीदुज्जयिनीं प्रति ॥ ७४ ॥
मार्गे सोपारक द्रंगे, स सेन्य उत्ततार सः । तत्पुरेश प्रधानोथ, तत्सेवार्थं समागतः ॥ ७५ ॥ श्रीपालेन नृप-
स्याना–गमन कारणं स च । पृष्टः सन् प्राह हे! नाथ, महसेन नृपोस्ति नः ॥ ७६ ॥ तस्य ताराभिधा राज्ञी,
तस्यास्तिलकसुंदरी । सुतास्ति साद्य सर्पेण, दष्टा ततश्च सा मृता ॥ ७७ ॥ तद्दहनाय भूपोऽगा–त्स्मशानेऽत्रा-
हमागतः । श्रीपालस्तन्निशम्याश्व–मारुह्य तत्र चागमत् ॥ ७८ ॥ तेन हारः स तत्कंठे, स्थापितो मंत्र वारिणा ।
पुनः सिक्ताथ सा सज्जी, भूयोत्थिताथ साऽवदत् ॥ ७९ ॥ हे! तातात्र किमर्थं च, मिलितोस्ति जनस्तदा । भूपतिः

सर्वं वृत्तांतं, कथित्वा प्राह हे सुते ! ॥ ८० ॥ सांप्रतमस्य प्रसादेन, त्वं जीविताभवस्ततः । महसेन नृपोऽवादी-
त्, हे ! नरेंद्रोपकारक ॥ ८१ ॥ तुभ्यं मया सुता दत्ता, तेनापि स्वीकृतं ततः । महसेनो विवाहं च, तयोः चक्रे
महोत्सवात् ॥ ८२ ॥ महसेन नृपस्तस्मै, दत्त्वा बहु धनादिकं । सेन्ययुक्तः स्व जामात्रा, श्रीपालेन सहाऽचल-
त् ॥ ८३ ॥ श्रीपालोऽमेलयन्स्थाने-स्थाने महद्बलं नृपान् । नामयन् प्राप्तवानुज्ज-यिन्याः परिसरे क्रमात् ॥८४॥
तदा च मालवेशोना-यांतं शत्रुबलं महत् । श्रुत्वा सज्जीकृतं दुर्गं, यंत्रनाल्यादि शस्त्रकं ॥ ८५ ॥ स च दुर्गे
तृणं धान्यं, काष्टं जलादि संचयं । चकार नागरालोका, भयातुरास्तदाऽभवन् ॥ ८६ ॥ श्रीपालस्याथ
सेन्येन, सा पुरी परिवेष्टिता । श्रीपालोऽगान्निशा मध्ये, जननी मिलनाय च ॥ ८७॥ प्राप्तो हारप्रभावेण, द्वारे
प्रसू गृहस्य सः । तत्र स्थितः प्रसू पत्नी, वचनानि श्रृणोति च ॥ ८८ ॥ मदनसुंदरीं वक्ति, जननी हे सुतो-
त्तमे !। समंतान्नगरी शत्रु, बलेनाद्यास्ति वेष्टिता ॥ ८९ ॥ लोकाश्चलाचलं कुर्व-त्यत्र किं किं भविष्यति ।
मत्पुत्रः परदेशेऽगा-त्तस्य च वत्सरोऽभवत् ॥ ९० ॥ नायाति तस्य संदेश, पत्रमप्यावयो र्गतिः । का ?
भविष्यति तत्श्रुत्वा, प्राह मदनसुंदरी ॥ ९१ ॥ हे मातः ! सिद्धचक्रस्य, प्रभावेनावयो र्भयं । न भविष्यत्यतः

खेदो, युष्माभि र्मा विधीयतां ॥ ९२ ॥ किं च मयाद्य संध्यायां, कुर्वत्यारात्रिकां प्रभोः। जिनमूर्त्तेरपूर्वं स्वरूपं दृष्टं प्रमोद कृत् ॥ ९३ ॥ तेनानंदेन चाद्यापि, मेस्ति रोमांचितं तनौ। पुन र्ममस्फुरत्यद्य, वामनेत्रं पयोधरं ॥९४॥ अधुना ज्ञायते तेन, सद्य एव सुतस्तव। आगमिष्यति तत्श्रुत्वा, कमला प्राह हे सुते! ॥९५॥ ते जिव्हायां सदैवास्त्य–मृतं सोथ निशम्य तत्। स्व भार्याया वचः सत्यी, करणार्थं जगाद च ॥९६॥ द्वारमुद्घाटय हे! मात–स्तत्श्रुत्वा कमलाऽवदत्। हे वत्से! निश्चितं चैदं, मत्पुत्रस्य वचोस्ति च ॥९७॥ मदनसुन्दरी प्राह, कदापि जिनदर्शनं। मिथ्या न स्यात् तदोत्थायो–द्घाटयत्तत्कपाटकौ ॥ ९८ ॥ श्रीपालः स्व प्रसूं नत्वा, स्कंधे चारोप्य मातरं। प्रियां करे गृहीत्वाऽगात्, निज स्थाने नभोध्वना ॥ ९९ ॥ तत्र भद्रासने स्थाप्य, प्रसूं तस्याः पुरोऽखिलं। रत्नाभरण वस्त्रादि, सारं मुक्त्वा जगाद तां ॥१००॥ युग्मम् ॥ हे! मातस्ते प्रसादेन, सर्वा इमा विभूतयः। बभूवु र्मे तदा नेमुः, श्वश्रूं त्रयोदशप्रियाः ॥१०१॥ तदा च कमलात्यंतं, हर्षिताशीषमर्पयत्। ताभ्यः पुनश्च ता नेमु–र्मदनसुंदरीमपि ॥१०२॥ विद्याधरेश कन्याथ, कुमारस्याऽखिलं वृतं। पूर्वानुभूतकं श्वश्रू, कमलायाः पुरोऽवदत् ॥ १०३ ॥ ततश्च कमला तासां, स्व हस्तेन पृथक पृथग्। विवि-

धाभूषणादीनि, ददौ चैकैक नाटकम् ॥ १०४ ॥ इत्यष्टमः सर्गः समाप्तः ॥ ८ ॥

॥ अथ नवमः सर्गः प्रारभ्यते ॥ ९ ॥

अथ श्रीपालराट् प्राह, मदनसुंदरीं प्रति । अत्र केन प्रकारेण, तातमाकारयामि ते ॥ १ ॥ श्रुत्वेति प्राह सा स्वामिन् ! समेत्वत्र पिता मम । स्कंधे कुठारकं कृत्वा, गृहीत्वा च तृणं मुखे ॥ २ ॥ येन कोपि न कुर्याच्च, जिनशासन हीलनां । श्रीपालः प्रभातेऽथा–कार्य दूतं जगाद च ॥ ३ ॥ भो दूत ! त्वं प्रजापाल, नृपाग्रे गच्छ तत्र च । गत्वा तस्मै त्वयैवं च, वक्तव्यं हे नराधिप ! ॥ ४ ॥ त्वया स्कंधे कुठारं च, कृत्वा धृत्वा मुखे तृणं । श्रीपालभूप पार्श्वे चा–गम्यं कुर्वन्यथा रणं ॥ ५ ॥ दूतोपि तत्र गत्वा च, तथैवाह निशम्य तत् । प्रजापाल नृपोऽवादी–न्निजशक्तिं विचार्य च ॥ ६ ॥ भो दूत ! त्वं व्रजाहं तु, करिष्यामि वचस्तव । ततस्तदुक्तरीत्या श्री–पाल द्वारे ययौ नृपः ॥७॥ श्रीपालोपि कुठारादि, दूरं तस्य विधाप्य सः । स्व पार्श्वे स्थापितो वस्त्रा–र्पण मानपूर्वकं ॥ ८ ॥ ज्ञात्वाथावसरं प्राह, तातं मदनसुंदरी । हे तात ! कर्मणा लब्धो, मम वरो विलोक्यतां ॥ ९ ॥ येन ते स्कंधतो दूरं, कुठारादि चकारि तं । राज्ञापि कर्मणः सत्य, स्वरूपं मानितं तदा ॥ १० ॥

ज्ञात्वा श्रीपाल वृत्तांतं, राजा तत्र स्थितस्तदा । सौभाग्यसुंदरी रूप–सुंदरी तत्र चागता ॥ ११ ॥ उज्जयिन्यां
ततो शांति–र्जाता श्रीपालकस्तदा । सर्वसज्जन मेलाप–मेवंविधं विलोक्य च ॥१२॥ आदिदेश विनोदार्थं, नृत्यं कर्त्तु
नटीस्ततः । सर्वाः सजीभवन्ति नो–त्थिता मूलनटी पुनः ॥ १३ ॥ युग्मं ॥ तया विना रसो नृत्ये, प्रादुर्भवति
नो तदा । महाकष्टेन ताभिः सा, चानीता रंगमंडपे ॥ १४ ॥ ततो दुःख विदग्धा सा, रुदंती मूल नर्त्त की ।
संक्षेपेण स्व वृत्तांतं, जगाद लोक भाषया ॥ १५ ॥ "किहां मालव किहां शंख–पुर किहां बव्वर किहां नट्ट । सुरसुंद-
री नचावींये, वलो देव शिर दट्ट ॥ १६ ॥" तत्सुरसुंदरी माता, श्रुत्वा तत्रागता तदा । सापि स्व जननी कंठे,
विलग्नोच्चै रुरोद च ॥ १७ ॥ तां सुरसुंदरीं प्राह, माता हे पुत्रि ! चाजनि । किमिदं वद वृत्तांतं, सर्वं तदावदच्च
सा ॥ १८ ॥ कुशलेन च हे मातः !, शंखपुरी परिसरे । वयं प्राप्तास्तदा सर्वे, सार्थलोकाःपुरे गताः ॥ १९ ॥ अहं
शुभमुहूर्त्तार्थ–मुद्याने स पतिः स्थिता । निशायां सहसा तत्र, चौरधाटी समागता ॥ २० ॥ चौरधाटीं च तां
दृष्ट्वा, ते जामाता पलायितः । तदा लक्ष्म्या समं लात्वा, मां नेपाले ययुश्च ते ॥ २१ ॥ विक्रीता तत्र मौल्येन,
सार्थवाहस्य तेरहं । वेश्यायै तेन विक्रीता–हं बव्वर कुले पुनः ॥ २२ ॥ सा वेश्या मम नृत्यादि, वेश्या कलाम-

शिक्षयत्। ततोऽहं निपुणा जाता, गीत नृत्य कलादिषु ॥ २३ ॥ बब्बरेश महाकाल, नृपस्य महतीरतिः। नृत्येऽभूत् संति तस्याग्रेऽ—शीतिनर्त्तकिका वराः ॥ २४ ॥ नृत्यादिक कलायां मां, विशेष निपुणां नृपः। विज्ञाय स्थापया मास, वरे स्व प्रिय नाटके ॥ २५ ॥ श्रीपालोगात्तदा तत्र, मदनसुंदरी पतिः। तदा च बब्बराधीश—स्तस्मै निज सुतां ददौ ॥ २६ ॥ श्रीपालाय पुनर्भूपोऽदान्नव नाटकानि च। तन्मध्ये संस्थिता नृत्यं, तस्याग्रेऽहं चकार च ॥ २७ ॥ अद्याहमत्र सर्वं स्व, कुटुंबिनं विलोक्य च। दुःखं प्राप्तास्म्यहं चैवं, निवेद्य साऽ—वदत्पुनः ॥२८॥ हे! ताताहं कुशीलाहं, निर्भाग्या गत पुण्यका। भवद्भिस्तु विवाहो मे, महाविभूतितः कृतः ॥ २९ ॥ परंतु ममा भाग्येने—दृश्यवस्था ममाऽभवत्। ततो मे कर्मणामस्ति, दोषो नान्यस्य कस्यचित् ॥३० ॥ उक्तंच ॥ "भाग्यं फलति सर्वत्र, न च विद्या न पौरुषं। समुद्र मथनाल्लेभे, हरिर्लक्ष्मीं हरो विषं ॥ ३१ ॥" धन्या शीलवती भाग्य—वती च भगिनी मम। मदनसुंदरी तस्या, धर्मश्च फलितो भृशं ॥ ३२ ॥ इत्यादि सुरसुंदर्या, वृत्तं ज्ञात्वारिमर्दनः। श्रीपालेन स्व सेनायां, गवेषितोऽमिलत्स च ॥ ३३ ॥ श्रीपालोथ ददौ तस्मै, धन पुरादि पूर्वकं। तां सुरसुंदरीं तौ तु, सम्यक्त्व प्रापतुस्तदा ॥ ३४ ॥ सिद्धचक्रस्य सर्वत्र, महिमा विस्तृतस्तदा।

सप्तशत नरास्तत्र, श्रीपालाग्रे समाययुः ॥ ३५ ॥ तेभ्यो राणापदं दत्त्वा, स्वपार्श्वे स्थापिताश्च ते । श्रीपालेन तदायातः, स्व मंत्री मतिसागरः ॥ ३६ ॥ श्रीपालः पूर्ववत्तस्मै, स्वामात्य पदवीं ददौ । पुनस्तं स्थापयामास, सकल राज्य कर्मणि ॥ ३७ ॥ श्वसुरान् शालकांश्चान्य, भूपतीन् सुभटानपि । श्रीपालो बहुमानं च, ददौ धन पुरादिभिः ॥ ३८ ॥ तेपि च सेवया मासुः, श्रीपाल पृथवीपतिं । विज्ञप्तोथ नृपोन्येद्यु–र्मतिसागर मंत्रिणा ॥ ३९ ॥ दुष्टेनाजितसेनेन, गृहीतं पितृराज्यकं । हे नाथ ! तव बाल्याव–स्थायां त्वं तद्गृहाण च ॥ ४० ॥ तदैव तव जन्मापि, सफलं च भविष्यति । नान्यथेत्यादिभिस्तेन, चोत्साहितो नृपोऽवदत् ॥ ४१ ॥ भो मंत्रीश्वर ! भूमीशै–र्राज्यकार्यं विधीयते । साम-दान-भेद-दंड, चतुर्धा राज्यनीतिभिः ॥ ४२ ॥ ततः प्राक्तत्र संप्रेष्यो, दूत इति विचार्य सः । चतुर्मुखाभिधं दूतं, चंपापुर्यां मुमोच हि ॥ ४३ ॥ सोपि तत्राशु गत्वा चा–जितसेन नृपं-प्रति । एवं जगाद सोत्कर्षं, भोऽजितसेन भूपते ! ॥ ४४ ॥ प्राक् श्रीपालस्तु बालोऽभूत्, क्षमो भू भार धारणे । नाभूत्तेन त्वया राज्यं, गृहीतं तस्य हेलया ॥ ४५ ॥ ततोद्यापि गतं नास्ति, किमपि तस्य च त्वया । प्रदेयं राज्यकं येन, शांतिर्निजकुलेऽभवेत् ॥ ४६ ॥ अन्यथा कुलनाशस्ते, भविष्यति न संशयः । किं च श्रीपालभूपस्य,

तव चांतरमस्ति न ॥४७॥ पुनः श्रीपालसेनास्ति, महती सततो रणं। कृत्वा लास्यति ते राज्यं, पुना राजेश्वरोस्ति सः ॥ ४८ ॥ तत्सेवार्थं नृपाः सर्वे, चागताः संति तेन च। त्वमपि तस्य सेवार्थ–मागच्छ सुप्रतापिनः ॥ ४९ ॥ इति दूतोक्तमाकर्ण्या–जितसेनोपि रोषतः। प्राहैवं त्वमवध्योसि, भो दूत ! भो चतुर्मुख ! ॥ ५० ॥ त्वामहं तेन जीवंतं, मुंचामि किं च ते प्रभुः। मेस्ति शत्रुर्दयां कृत्वा, बाल्ये मया न मारितः ॥ ५१ ॥ स सुप्तसिंहवन्मां चो–त्थापयति ततो मम। सैन्येन तव स स्वामी, क्षणाद्विनस्यति ध्रुवम् ॥ ५२ ॥ एवं विधानि वाक्यानि, तस्य श्रुत्वाऽवदत्पुनः। दूतो भो जितसेन ! त्वं–तु खद्योतो रविः स तु ॥ ५३ ॥ ततो निःकारणं लोक–संहार करणेन च। भविष्यति तवानिष्ट–मेव तत्त्वं विचारय ॥ ५४ ॥ श्रुत्वेत्यजितसेनोपि, निर्भर्त्सनादि पूर्वकं। दूतं निष्कास्य चोवाच, भो दूत ! त्वं व्रजाशु हि ॥५५॥ तव प्रभुं रणाय, त्वं प्रेषय रण भूमिके। आगत्याहं करिष्यामि, त्वत्स्वामिना समं रणं ॥ ५६ ॥ श्रुत्वेति दूत आगत्य, श्रीपालायन्यवेदयत्। सर्वोदंतं तदा तेन, स्वसेना प्रगुणी कृता ॥ ५७ ॥ अविच्छिन्न प्रयाणैश्चा–गतः श्रीपालभूपतिः। चंपापरिसरे तत्रा–जितसेनोपि चागतः ॥ ५८ ॥ अथ संग्राम भूमौ च, श्रीपालाजित सेनयोः। जातं सैनिक वीराणां, युद्धं महाभयं करं ॥ ५९ ॥ श्रीपाल सेनिकैस्तत्रा–

जितसेनस्य सैनिकाः । भग्नास्तदा स्वयं तत्रा–जितसेनः समागतः ॥ ६० ॥ स्व सैनिकान् स्थिरी कृत्य, स च श्रीपालसैनिकान् । ममंथ दधिवत्तेन, नष्टप्रायं कृतं वलं ॥ ६१ ॥ तद्दृष्ट्वा सहसागत्य, तैः सप्तशत राणकैः । अजितसेन भूमीशः, परितः परिवेष्टितः ॥ ६२ ॥ तेषां च सिंहनादेना–जितसेन नृपस्य च । अखिला सहसा सेना, दिशोदिशं पलायिता ॥ ६३ ॥ ततस्तै राणकैः प्रोक्तं, भोऽजितसेन ! चाधुना । किमपि ते गतं नास्ति, श्रीपाल शरणं कुरु ॥ ६४ ॥ तदवगण्य तैः सार्द्धं, चकाराजितसेन राट् । संग्रामं तैस्तदा बद्धः, पातयित्वा गजात्स च ॥ ६५ ॥ श्रीपालाग्रे स चानीत–स्तैः श्रीपाल नृपस्तदा । तं मुक्त बंधनं कृत्वाऽ–वादीन्मधुरया गिरा ॥ ६६ ॥ हे तात ! निज चित्ते मा, खेदं कुर्वधुना निजं । राज्यं त्वं भुंक्ष्व ते यद्य–धिकमपि प्रयुज्यते ॥ ६७ ॥ त्वं तदपि गृहाणेति, निशम्याजितसेन राट् । अचिंतयत्तदा दूत, वचो न मानितं मया ॥ ६८ ॥ तदयुक्तं कृतं वृद्धो–प्यहं महाघ कारकः । महाऽधर्मी कृतघ्नोस्मि, पर द्रोह परायणः ॥ ६९ ॥ श्रीपालोयं तु बालोपि, धर्मकर्म परायणः । परोपकार कर्तास्ति, दानी च करुणा परः ॥ ७० ॥ मित्रद्रोहेण कीर्त्तिश्च, राजद्रोहेण नश्यति । नीतिश्च बाल-द्रोहेण, सुभगतिश्च नश्यति ॥ ७१ ॥ कृतमस्ति मयात्वेतत्–त्रयमतो भविष्यति । का ? गति मम दुष्टस्य, महा-

पाप विधायिनः ॥ ७२ ॥ एतत्पापविशुद्ध्यर्थं, दीक्षादानं वरं मम । इति चिंतयतस्त्वस्या–शुभं कर्मपलायितं ॥ ७३ ॥ कर्मभिर्विवरं दत्तं, तस्मै सोथ स्वयं ललौ । दीक्षां समर्पयल्लिंगं, तस्मै शासनदेवता ॥ ७४ ॥ तदा श्रीपालराड् दृष्ट्वा तं दीक्षितं प्रहर्षितः। परिवारयुतो नत्वा, सद्भावेन तमस्तवीत् ॥ ७५ ॥ क्षमाखड्गात्त्वया क्रौधो, हतो मानागिरिः पुनः। त्वयामार्दव वज्रेण, चूर्णितो हे मुनीश्वर ! ॥ ७६ ॥ त्वयाऽऽर्जव कुठारेण, माया-वल्ली च छेदिता । तारितो लोभसिंधुर्नि–स्पृहता पोततस्त्वया ॥ ७७ ॥ तपश्च संयमं सत्यं, शौचमकिंचनं तथा । ब्रह्मादि दशधा साधु, धर्मश्चांगीकृतस्त्वया ॥ ७८ ॥ अतो हेऽ ! जितसेनाख्य, महामुने नमोस्तु ते । तस्येत्यादि स्तुतिं कृत्वा सद्भावेन ननाम तं ॥ ७९ ॥ तद्राज्ये तत्सुतं स्थाप्य, प्रविवेश शुभे क्षणे । श्रीपालाख्य नराधी-श–श्चंपापुर्यां महोत्सवात् ॥ ८० ॥ स पितुरासने तस्थौ, तदा सर्वैर्नरेश्वरैः । मिलित्वा तस्य राज्याभि–षेकः कृतः सुविस्तरात् ॥ ८१ ॥ श्रीपालेन कृता मुख्य, राज्ञी मदनसुंदरी । अन्या द्वादशभार्याश्च, लघु राज्ञ्यः कृताः पुनः ॥ ८२ ॥ पुनः श्रीपालभूपेन, मतिसागर मंत्रिणे । महामात्यपदं दत्तं, धवलसुहृदां पुनः ॥ ८३ ॥ आमा-त्यपदमाहूय, कोशांब्या विमलाभिधं । धवलतनुजं तस्य, सर्वं श्रेष्ठिधनं ददौ ॥ ८४ । युग्मं ॥ स तस्मै विम-

तत्र च तेन हेमीय,
लायादात्, श्रेष्टिपदं पुनर्ददौ । अन्येषामपि सन्मानं, यथायोग्यं धनादिभिः ॥ ८५ ॥ परिवार युतस्तत्र, श्रीपालाख्य
नव जिनालयानि च । काराप्य स्थापितास्तेषु, रत्नीया जिनमूर्त्तयः ॥ ८६ ॥ अमार्युद्घोषणं तेन, सप्तव्यसन वर्जनं । कृतं सर्वत्र
नृपोऽकरोत् । सदा नवपदध्यानं, पुनश्च शासनोन्नतिं ॥ ८७ ॥ तद्राज्ये मनुजाः प्रायो, धन धान्य सुतादिभिः । वृद्धिंगताश्च तत्रैवं, नृपः
दानादि, धर्मवृद्धिः कृता वरा ॥ ८८ ॥ अथोत्पन्नावधिज्ञानोऽ–जितसेन मुनीश्वरः । विहरन् सन् दमी चंपा–पुर्युद्याने समागतः
सुखेन तिष्ठति ॥ ८९ ॥ वनपालोथ भूपाय, तद्वर्द्धापनिकां ददौ । प्रीतिदानं तदा तस्मै, श्रीपालभूपति र्ददौ ॥ ९१ ॥ मातृ
॥ ९० ॥ जायायुतो भूप–स्तत्र महर्द्धि विस्तरात् । गत्वा महामुनिं नत्वा, स्तुत्वास्थाद्विधिपूर्वकं ॥ ९२ ॥ तदा मुनिर्ददौ
धर्म–देशनां भव नाशिनीं । नरजन्म श्रुति श्रद्धा, व्रतदुर्लभ सूचिकां ॥ ९३ ॥ देशनांते नृपो नत्वा, मुनिं
पप्रच्छ हे गुरो ! । कर्मणा केन बालत्वे, कुष्टोत्पत्तिरभून्मम ॥ ९४ ॥ केन सुकर्मणा शांति–स्तस्य रोगस्य
चाऽजानि । कर्मणाकेन सर्वत्रे–दृशी लक्ष्मी ममाभवत् ॥ ९५ ॥ केनाहं कर्मणा सिंधौ, पतितो निर्गतस्ततः ।
कर्मणाकेन बालत्वे, ममराज्यं गतं प्रभो ॥ ९६ ॥ केनाहं कर्मणा प्राप्तो, डूबत्वं हे मुनीश्वर ! । भवद्भिश्च दयां

कृत्वा, मह्यं तत्सर्वमुच्यतां ॥ १७ ॥ तन्निशम्य मुनिः प्राह, हे ! नरेशेह संसृतौ । जीवनां सुख दुःखानि–स्युः पूर्वकृत कर्मतः ॥ १८ ॥ इति नवमः सर्गः समाप्तः ॥ ९ ॥

॥ अथ दशमः सर्गः प्रारभ्यते ॥ १० ॥

इहैव भरतक्षेत्रे, श्रीहिरण्यपुरेऽभवत् । श्रीकांतभूपतिः पापी, मृगया व्यसनी भृशं ॥ १ ॥ तस्यासीत् श्रीमतीराज्ञी, जैनधर्मे विचक्षणा । कृपा प्रशम संवेगा–स्तिक्यादि गुणशालिनी ॥ २ ॥ सा राज्ञी मृगयाशक्तं, स्वपतिं सर्वदा ददौ । जीवदयोपदेशं च, स्वर्गापवर्ग दायकं ॥ ३ ॥ स वक्ति हे ! प्रियेऽतोऽहं, हनिष्यामि न देहिनः । परं गत्वा बहिर्जंतू–न्मारयाति तथैव सः ॥ ४ ॥ अथान्येद्यु नृपः सप्त–शतोद्भटनरैः समं । जीवान् हंतुं गतो रण्ये, श्वापद जंतुभि र्भृते ॥ ५ ॥ स तत्रैकं मुनिं दृष्ट्वा, धर्मध्वज प्रधारकं । प्राह भो ! सुभटा एष, कोपि कुष्टी भविष्यति ॥ ६ ॥ श्रुत्वेति सुभटैः सर्वै–रेष कुष्ट्रये ववर्त्तते । इत्युक्त्वा यष्टिभिः साधुः, स ताड्यते यथा यथा ॥ ७ ॥ तथा तथा नृपो बाढं हसतिस्म ततश्च ते । सर्वे हरिणवर्गस्य, पृष्टे प्रधाविता भृशं ॥ ८ ॥ धावमानाश्च ते सर्वे, प्राप्ताः स्वनगरं ततः । स रात्रौ स्वप्रियाग्रे त–द्वक्ति दिन स्वरूपकं ॥ ९ ॥ राज्या निवारितो

भूपो, न करिष्याम्यतः परं। इति वक्ति वहिर्याति–तथैव प्रकरोति सः ॥१०॥ अथान्यदा स्वसेनां च, पृष्टे मुक्त्वा स भूपतिः। सगच्छन्मृगयार्थं हि, मृगपृष्टे प्रधावितः ॥ ११ ॥ इतो नदीतटे वृक्ष–गणेऽदृश्योभवन्मृगः। तं शोधयन् स चाद्राक्षी–त्तत्र ध्यानस्थितं मुनिं ॥ १२ ॥ पापिष्टेन तदा तेन, लात्वा हस्तेन तं मुनिं। कौतुकार्थं स निक्षिप्तो, नदीजले महामुनिः ॥ १३ ॥ आकुल व्याकुलं नीरे, मुनिं दृष्ट्वा नृपो जलात्। निष्कास्य भावतो भूमौ, मुक्त्वा गृहं समागतः ॥ १४ ॥ मुनेः सलिल निक्षेपा–दि वृत्तांतं नृपोऽवदत्। प्रियां प्रति तदा प्राह, सा राज्ञी भूपतिं प्रति ॥ १५ ॥ हे नाथ! यांति सामान्य, जीवघातेन दुर्गतौ। जीवाः पुन मुंने र्घाता–त्किं वक्तव्यं च देहिनां ॥ १६ ॥ यदुक्तं "चेइय दव्व विणासे, रिसिघाए पवयणस्स उड्डाहे। संजइ चउत्थ भंगो, मूलग्गि वोहि लाभस्स ॥ १७ ॥" मुनिघातेन जीवानां, भवति दीर्घ संसृतिः। गमनं दुर्गतौ भूयो, भूयश्च बोधि दुर्लभः ॥ १८ ॥ इति राज्ञी वचः श्रुत्वा, भूपतिः प्राह हे प्रिये !। अतः परं करिष्यामी–दृशं कार्यं कदापि न ॥ १९ ॥ तेन कृता न हिंसैवं, कतिचिद्दिवसावधि। पुनरपि प्रिया शिक्षां, विस्मृतवान् कुसंगतः ॥ २० ॥ एकदा स गवाक्षस्थो, भूपोऽद्राक्षीत्तपोधनं। वनादागतमाहार, जलार्थैकं मुनीश्वरं ॥२१ ॥ तदा नृपोऽवदद्भृत्यान्, भो

मे मलिनी कृतानेन—पुरी तदा गले मुनिं।
सेवकाः ! पुराद्बहिः। निष्काश्यतां नरं चैनं, डुंबवन्मलिनं भृशं ॥२२॥ तदा राज्ञी गवाक्षस्था, तद्दृष्ट्वाहूयतत्क्षणं। नृपं निर्भ-
धृत्वा ते सेवका निष्का—सयामासुः पुराद्बहिः ॥ २३ ॥ हे प्रिये ! स मुनिश्चात्रा—नीयतां क्षामणामहं। तेन समं विधास्येथ
र्त्सयामास, नृपोपि लज्जितोऽवदत् ॥ २४ ॥ तं नत्वा स्वापराधं स, क्षामयित्वा मुनेः पुरः। स्थितस्तदावदद्राज्ञी, हे मुने ! हे क्षमा-
राज्याहूतो मुनिः स च ॥२५॥ मेऽनेन स्वामिना साधु, मारण बंधनाद्यघं। कृतमतोस्य शुद्ध्यर्थं, कोप्युपायः प्रकाश्यतां ॥२७॥
धन ! ॥२६॥ तन्निशम्य मुनिः प्राह, हे भद्रेऽयं ! नृपोऽकरोत्। मुनिसंतापनं जीव—घातादि बहुपातकं ॥ २८ ॥ अथ तत्पाप-
शुद्ध्यर्थं, युवाभ्यां भावपूर्वकं। विधेयं सिद्धचक्रस्या—राधनं पापनाशिनः ॥२९॥ तत्स्वीकृत्याथ भूपेन, राज्यासमं
भावतः। मुन्युक्त विधिना सिद्ध—चक्रस्याराधना कृता ॥३०॥ राज्ञी सखीभिरष्टाभि—रुद्यापनक्षणे कृता। सद्भाव-
पूर्वकं सिद्ध—चक्रपूजानुमोदना ॥ ३१ ॥ सप्तशतनरैस्तेश्च, धर्मकर्म परायणं। दृष्ट्वा नराधिपं तस्य, धर्मकार्यं
प्रशंसितं ॥३२॥ पुनस्तैः क्षामितं किंचि—न्निजपापमथैकदा। स नृपस्तैः समं ग्रामः, सिंहराजस्य लुंटितः ॥ ३३ ॥
ग्रामाद्धनादिकं लात्वा, तेपश्चाद्वलितास्तदा। सिंहराजोपि लात्वा स्व—सैन्यं तत्पृष्टतोऽगमत् ॥ ३४ ॥ ततस्तेषां

च संग्रामोऽ–भवत्तिंसहेन ते हताः । सप्तशतनरामृत्वा, ते क्षत्रियकुलेऽभवन् ॥३५॥ ते च पूर्वभवे साधु, ताडन क्षाष्ट्रिजलपनात् । जीवघात विधानेन, कुष्टिनोऽत्र भवेऽभवन् ॥ ३६ ॥ धर्मप्रशंसनाज्जाता, ते नीरोगा अमी च ते । यः श्रीकांतः स मृत्वा त्वं, श्रीपालाख्य नृपो भवः ॥ ३७ ॥ या च ते श्रीमतीराज्ञी, सेयं मदनसुंदरी । पूर्व-भवे प्रिया साऽभू–त्तेऽत्राप्यजनि सा प्रिया ॥ ३८ ॥ इयं परभवेऽभूत्ते, यथा सुहित वांछका । तथा चात्रापि हे भूप–ते ! सास्ति हित वांछका ॥३९॥ पूर्वं कारापिता सिद्ध–चक्रस्याराधना तया । त्वत्पार्श्वादधुनाप्यारा–धना कारापिता पुनः ॥ ४० ॥ हे श्रीपाल ! पुनः साधुः, कुष्टी प्रोक्तस्त्वया ततः । त्वं कुष्ट्यभूश्च नीरोगः सिद्धचक्र प्रभावतः ॥ ४१ ॥ नदीजले मुनिः क्षिप्त–स्त्वया ततश्च सागरे । पतितस्त्वं पुनः साधु–र्निष्कासितो जलात्त्वया ॥ ४२ ॥ तेन त्वं निर्गतः सिंधोः, पुनः पूर्वभवे त्वया । मातंगः कथितः साधु–स्त्वं मातंगोभव-स्ततः ॥४३॥ मुनेश्च क्षामणात्तेऽगात् , मातंगत्वमभूः पुनः । सर्वलक्ष्मी निवासी त्वं, सिद्धचक्र प्रभावतः ॥४४॥ ताः श्रीमत्यष्टसख्यश्च, सिद्धचक्रानुमोदनात् । जाता लघुपट्टराज्य–स्तेऽत्रभवे नरेश्वर ॥ ४५ ॥ एतासां मध्य-तोऽष्टम्या, राज्या पूर्वभवे समं । सपत्न्या कलहे जाते, तस्यै प्रोक्तमिदं वचः ॥ ४६ ॥ रे दुष्टे ! खादतु त्वां हि,

सर्पस्ततोहिनात्र च। सा दष्टाथ स सिंहोपि, प्रहारैर्जर्जरीभवत् ॥ ४७ ॥ तदा सोनशनं कृत्वा, दीक्षां लत्वा समाधिना। मृत्वा चाजितसेनाख्य, नृपोत्राहं भवेऽजनि ॥ ४८ ॥ त्वयात्वेको ममग्रामो, लुटितः प्राग्भवे तदा। मयाप्यत्रभवे राज्यं, ते गृहीतं नराधिपे ! । ॥ ४९ ॥ पूर्व-भवे मया सप्त–शतनराश्च मारिताः। समकालं ततस्ते मां, बध्वा तव पुरोऽमुचत् ॥५०॥ पूर्व-भवे मया दीक्षा, गृहीतात्राप्यहं ललौ। दीक्षां ततोऽवधि ज्ञानं, जातं मे शुभ भावतः ॥ ५१ ॥ यादृशं कर्म जीवेन, कृतं स तादृशं फलं। लभतेऽतोस्त्ययं जीवः, कर्त्ता भोक्ता च कर्मणः ॥५२॥ इति मुनि मुखात् श्रुत्वा, संसार नाटकं हृदि। विचिंतयन् पुनः प्राह, श्रीपालस्तं मुनिं प्रति ॥५३॥ हे मुने ! मम दीक्षाया, ग्रहणे शक्तिरास्ति न। अतो मयि कृपां कृत्वा, मदुचितं निवेदय ॥ ५४ ॥ येनेदं सफलं जन्मं, मेस्याच्चांते शिवं-भवेत्। तदोक्तं मुनिना राजन् !, दीक्षोदयस्तवास्ति न ॥ ५५ ॥ किंतु नवपदध्यान, लीनः सन् नवमे दिवि। त्वं यास्यसि क्रमान्मोक्षं, यास्यसि नवमे भवे ॥ ५६ ॥ ततः श्रीपाल भूपोपि, मुनिं नत्वा गृहेऽगमत्। विजहार मुनींद्रोपि, भव्यान्विबोधयन् भुवि ॥५७॥ अथान्येद्यु र्नृपं प्राह, मदनसुंदरी प्रिय !। पूर्वं संक्षेपतः सिद्ध–चक्रस्योद्यापनं कृतं ॥ ५८ ॥ ततोधुना पुनः कृत्वा, तत्तपश्च पृथक् पृथक्। श्रीनवपद

सद्भक्तिः, कर्त्तव्या च सुविस्तरात् ॥ ५९ ॥ तन्निशम्य नृपः षट्ष–ण्मासं यावत्पृथक् पृथग् । एकैक पद्मा-
राध–यामास ध्यान भक्तितः ॥ ६० ॥ जीर्ण जिनालयोद्धार, विधापनाद्विधापनात् । नव नूतन चैत्यानां, श्रीपालः
प्रथमं पदं ॥ ६१ ॥ हेम-रूप्यादि संबंधि, सिद्धमूर्त्ते विधापनात् । तासां पूजादि सामग्री, करणात्सैद्धिकं पदं
॥ ६२ ॥ पात्र-वस्त्रान्न-पानीयो–षधि स्थानादि दानतः । वैयावृत्य विधानेना–भियान वंदनादिना ॥ ६३ ॥
पठन पाठनादौ च, साहय्य करणादिना । सुदेशकादुगणींद्रोपा–ध्याय साधु पदत्रयं ॥ ६४ ॥ संघार्चा रथयात्रा
श्री–तीर्थयात्रा विधानतः । श्रीशासन प्रभावादि, करणात्पष्ठकं पदं ॥ ६५ ॥ शास्त्र पठन पाठन, लेखन रक्षणा-
दिना । शास्त्रानाशातना पूजा, करणात्सप्तमं पदं ॥ ६६ ॥ यतिधर्मानुरागि त्वं, व्रत नियम पालनात् । व्रतोप-
करणादीनां, दानेन चाष्टमं पदं ॥ ६७ ॥ बाह्याभ्यंतर भेदाभ्यां, तपोभ्यां नवमं पदं । स्व सर्व परिवारेणा–राध-
यामास विस्तरात् ॥ ६८ ॥ अष्टिभिःकुलकं ॥ सिद्धचक्र तपः कुर्वन्, पुनः श्रीपालभूपतिः । त्रयोदशसहस्राणि,
तस्य जापं चकार च ॥ ६९ ॥ स्यु द्वादश शतान्याद्ये, पदे पुनर्द्वितीयके । अष्ट शतानि षट्त्रिंश–च्छतानि
स्युस्तृतीयके ॥ ७० ॥ पंचविंशशतानि स्यु–श्चतुर्थे पंचमे पुनः । सप्तविंशशतानि स्युः, पंच शतानि षष्ठके

॥ ७१ ॥ ज्ञाने पंचशतानि स्यु–र्देश सतानि चाष्टमे । द्वेशते नवमे स्थाने, स्याज्जापोयं जघन्यकः ॥ ७२ ॥ वर्षे च पंचमे तस्य, निजलक्ष्म्यानुसारतः । महाभक्त्या महाशक्त्या, चकारोद्यापनं नृपः ॥७३ ॥ श्रीपालभूपतेश्चासन्, नवपट्टप्रियोद्भवाः । श्री त्रिभुवनपालाद्या, नव पुत्रा विचक्षणाः ॥ ७४ ॥ तुरंग नवलक्षाणि, नवसहस्त्र सामजाः । रथनवसहंस्राणि नवकोटि पदातयः ॥ ७५ ॥ राज्यं निष्कंटकं धर्म, नीतिभ्यां पालयन्नृपः । च नवशतवर्षेषु, व्यतीतेषु सुखेन च ॥ ७६ ॥ श्रीत्रिभुवनपालाख्यं, स्थाप्य राज्ये निजं सुतं । समं मदनसुंदर्या, लीनो नवपदेष्वभूत् ॥ ७७ ॥ युग्मं ॥ राग-द्वेषारि जेत्तारः, सुरेंद्र महिताश्च ये । संसारागामिनो मोक्षात्, जिनवरान्नमामितान् ॥७८॥ निष्ठितार्थांश्च सिद्धिस्थान्, साद्यनंतस्थितौ स्थितान् । सिद्धान्नमामि चानंत–ज्ञानदर्शनधारकान् ॥ ७९ ॥ नमामि सकलाचार्यान्, पंचाचारप्रपालकान् । षट्त्रिंशद्गुणाधारान्, भव्य धर्मोपदेशकान् ॥८०॥ वर्त्तमानाखिलासोक्त, सिद्धांतवेदिनो वरान् । गुणयुक्तानुपाध्याया–न्नमामि मुनिपाठकान् ॥ ८१ ॥ ये सम्यग्दर्शन ज्ञान–चारित्रैर्मोक्ष मार्गकं । प्रसाधयंति साधून्तान्, जितमोहान्नमाम्यहं ॥ ८२ ॥ मोहक्षयादि संभूतं, क्षायिकोपशमादिकं । सुदेवगुरुधर्मेषु, श्रद्धानं दर्शनं स्तुवे ॥ ८३ ॥ समस्त ज्ञेय-हेयोपा–देय वस्तु-

प्रकाशकं । वंदे मत्यादि सद्ज्ञानं, मोह कुबोध नाशकं ॥८४॥ दर्शन-ज्ञान संयुक्तं—यन्निर्वाण सुखप्रदं । भवाब्धि तारकं चास्ति, तच्चारित्रगुणं स्तुवे ॥ ८५ ॥ दुष्कर्मेंधन वह्निश्च, दुःसाध्य साध्य साधकं । सर्वलब्धि निधानं च, तपोगुणं नमाम्यहं ॥ ८६ ॥ अर्हदादिगुण ग्रामं, ध्यायन् श्रीपालभूपतिः । मृत्वा समाधिना स्वर्गे, नवमे स सुरोऽभवत् ॥ ८७ ॥ समाधिना प्रसूस्तस्य, पुनर्मदनसुंदरी । अन्याः सर्वाः प्रिया मृत्वा, समाजग्मुश्च तत्र हि ॥ ८८ ॥ सिद्धचक्र प्रभावेन, ते श्रीपालादयोखिलाः । श्रीपाल भवतो मोक्षं, यास्यंति नवमे भवे ॥ ८९ ॥ श्रीसिद्धचक्र माहात्म्यं, श्रीपाल कथया मया । कथितं भवदग्रे हि, हे श्रेणिक ! नरेश्वर ! ॥९०॥ तन्माहात्म्यं निशम्याथ, नृपो नवपदेषु च । उल्लसित मना एवं, प्रोवाच गौतम प्रभुं ॥ ९१ ॥ अहो ! श्रीनवपदानां हि माहात्म्यमस्ति कीदृशं । तदा श्रीगौतमस्वामी, प्रोवाच श्रेणिकं प्रति ॥ ९२ ॥ एकैक पदमाहात्म्य—मनंतमस्ति भो ! तदा । नवपदेषु कर्त्तव्या, समुदितेषु का कथा ? ॥ ९३ ॥ संसारे सद्गतिं जीवा, ययु र्यास्यंति यांति च । तत्पदाराधना हेतु, ज्ञेयं नापर कारणं ॥ ९४ ॥ ततः सभास्थिताः प्रापु—र्हर्षं नृपादयो जनाः । अथ तस्मिन् क्षणे तत्र, वीरः समवसृतो जिनः ॥ ९५ ॥ प्रभोरागमनं श्रुत्वा, हर्षितः श्रेणिको नृपः । तत्र गत्वा प्रभुं नत्वा,

शुश्राव, प्रभुदेशनां ॥ ९६ ॥ ततश्च पृष्टवान् भूपः, सिद्धचक्र स्वरूपकं । जिनोपि तत्स्वरूपं च , गौतमवज्जगाद च ॥ ९७ ॥ इति दशमः सर्गः समाप्तः ॥ १० ॥

## ॥ प्रशस्ति ॥

श्रीखरतरगच्छे श्री–जिनमहेंद्र सूरयः । सुविहितेऽभवन् श्रीम–द्वीर परंपरागताः ॥ ९८ ॥ तत्करार्पित दीक्षाः श्री–मोहनाख्य मुनीश्वराः । जाता कृत क्रियोद्धारा, विख्याता अत्र भूतले ॥ ९९ ॥ तेषां शिष्या महादक्षा, आसन्महातपस्विनः । श्रीमज्जिनयशः सूरी–श्वराः शांता जितेंद्रियाः ॥ १०० ॥ तेषां पदे च पंन्यास केशराख्य मुनीश्वराः । राजंते सांप्रतं जीवा–न्बोधयंतोऽत्र भूतले ॥१०१॥ श्रीमोहनमुनींद्राणां, शिष्याः पुनर्विशारदाः । श्रीराजमुनयोभूवन्, निर्मल व्रतधारकाः ॥ १०२ ॥ तदीय मुख्य शिष्य श्री–गणि रत्न मुनीश्वराः ।

भांति कपाय दंडाक्षा–श्रवादि परिवर्जिताः ॥ १०३ ॥ संवत्सरां कांकसोमाब्दे, ज्येष्ठशुक्ले पुनस्तिथौ। सप्तम्यां कच्छदेशस्य, भुजद्रंगे समासतः ॥१०४॥ राजमुन्यणु शिष्येण, श्रीलब्धिमुनिना मया। श्रीपालेश कथा पद्यं, प्रेममुन्याग्रहात्कृतं ॥१०५॥ युग्मं॥ श्रीदेवगुरु सद्भक्ति, कारिणा विदुषा सता। पुण्य प्रभाविना कोष्टा–गारिणा गुण रागिणा ॥ १०६ ॥ श्राद्धसौभाग्य चंद्रेण, जिनधर्मानुसारिणा। संशोधितमिदं ग्रंथं, लींबडी पुर्निवासिना ॥ १०७ ॥ युग्मं ॥

॥ इति श्री लब्धिमुनि विरचितं श्रीपाल चरित्रं श्लोक बद्धं समाप्तम् ॥

समाप्तमिदं श्रीसिद्धचक्रमाहात्म्योपरि
श्रीपालचरित्रम् ।

निर्भर्त्सयामास दृष्ट्वा तत् श्रीमती नृपं ॥ ४६० ॥ अथ सानुशयो भूपोऽप्यानाय्य तमृषिं गृहे । निजागः क्षामयामास प्रणिपा-
तपुरस्सरं ॥ ४६१ ॥ श्रीमत्याथ मुनिः पृष्टो विभो ! अज्ञानभावतः । कृत्वोपसर्गं साधूनां राज्ञा यद् दुष्कृतं कृतं ॥ ४६२ ॥
तत्पापशान्तये स्वामिन्नुपायं ब्रूहि कञ्चन । कृतेन येन भूपोऽयं सद्यश्छुटति पातकात् ॥ ४६३ ॥ मुनिर्जगाद श्रीसिद्धच-
क्राराधनमुत्तमं । नृपः करोतु तत्सद्यः पातकाद्विमुच्यते ॥४६४॥ ततस्तपोविधानादिविधिपूजापुरस्सरं । श्रीमत्या सहितः सि-
द्धचक्रमाराधयन्नृपः ॥ ४६५ ॥ अन्वमोदि तपो राज्या वयस्याभिस्तदाष्टभिः । प्रशंसितं क्षणं सप्तशतसंख्यैश्च सेवकैः
॥ ४६६ ॥ ते चान्यदा नृपादेशात् सिंहनामकभूभुजा । समं युद्ध्वा मृताः सप्तशतानि कुष्ठिनोऽभवन् ॥४६७॥ साधूपसर्ग-
पापोत्थोऽमीपां कुष्ठामयोऽभवत् । श्रीकांतजीवस्तत्पुण्यप्रभावात्त्वं नृपोऽभवः ॥ ४६८ ॥ श्रीमत्या अपि जीवोऽयं जाता मदन-
सुन्दरी । जैनधर्मप्रभावेण सा राज्ञी च तवाभवत् ॥ ४६९ ॥ यत्त्वया मुनिवर्यस्य विहिताशातना तदा । कुष्ठित्वं वार्द्धिपतनं
मातंगत्वं ततोऽभवत् ॥४७०॥ यच्चैप ऋद्धिविस्तारस्तवासीदखिलोऽप्यसौ । प्रसादः सिद्धचक्रस्य परिस्फुरति निश्चितं ॥४७१॥
यत् श्रीमत्या सखीभिश्च कृता तदनुमोदना । तेन पुण्येन ते क्षुल्लपट्टदेव्योऽभवन्निमाः ॥ ४७२ ॥ धर्मप्रशंसया सप्तशतसंख्यैश्च
सेवकैः । यत्कर्मोपार्जि तेनैते सर्वे जाता निरामयाः ॥ ४७३ ॥ सिंहजीवस्त्वहं मासमेकं संपाल्य संयमं । जातोऽस्म्यजितसे-
नाख्यः शैशवे तव राज्यहृत् ॥ ४७४ ॥ प्राग्भवाभ्यासयोगेन चारित्रमिह चाप्तवान् । सोऽहं प्राप्तावधिज्ञानो नरेशात्र समागमं
॥ ४७५ ॥ एवं च यादृशं येन कृतं कर्म शुभाशुभं । अवश्यमेव भोक्तव्यं तत्तेन खलु तादृशं ॥ ४७६ ॥ इत्याकर्ण्य कुमा-
रोऽपि भावविस्मेरमानसः । प्राह संयमदानेन विभो ! तारय मां भवात् ॥ ४७७ ॥ अथोवाच मुनिर्भूपमुदयाद्भोगकर्मणः । भ-

नीति प्रिया तस्य जिनधर्मैकमानसा ॥ ४४३ ॥ पापर्द्धिनिरतश्चाभूद्राजा संसर्गदोषतः । सान्यदा मधुरैर्वाक्यैर्भूभुजं प्रत्यबूबु-
धत् ॥ ४४४ ॥ यथा—वैरिणोऽपि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् । सदैव च तृणाहारा हन्यंते पशवः कथं ? ॥ ४४५ ॥
तृणानि खादंति वसन्त्यरण्ये पिबंति तोयान्यपरिग्रहाश्च। तथापि वध्या हरिणा नराणां को लोकमाराधयितुं समर्थः? ॥४४६॥

हंतूण परपाणे अप्पाणं जे कुणंति सप्पाणं । अप्पाणं दिवसाणं कए स नासेइ अप्पाणं ॥ ४४७॥ इति राज्ञीवचोऽ-
म्भोभिरप्यभिन्नमना नृपः । मृगयामगमत्सप्तशतवंठैः सहान्यदा ॥ ४४८ ॥ वीक्ष्य धर्मध्वजकरं मुनिमेकं नृपोऽवदत् । कोऽ-
प्येष चामरकरः कुष्ठिराजोऽत्र दृश्यते ॥ ४४९ ॥ नृपतुष्ट्यै अथोल्लुंठैर्वंठैस्तैर्दुष्टचेष्टितैः । उपद्रुतो मुनीन्द्रोऽसौ क्षमावॉल्लेष्टु-
यष्टिभिः ॥४५०॥ यथा यथा ताड्यतेऽसौ मुनिरस्य तथा तथा। प्रावर्द्धिष्ट रसः शान्तो हासाह्वश्च नरेशितुः ॥ ४५१ ॥ भूयोऽ-
प्येकं मुनिं वीक्ष्य नदीकण्ठस्थितं नृपः । मेघे शैवलिनीपंके पातयामास निष्कृपः ॥ ४५२ ॥ पुनः सञ्जातकारुण्यो मुनिमा-
कृष्य मुक्तवान् । को वेत्ति ? प्राणिनां भाववराट्टत्ति नवां नवां ॥ ४५३ ॥ वृत्तांतमेतमाचख्यौ स सर्वं स्त्रीपुरः स्वकं । सापि
तं मधुरैर्वाक्यैर्नृपति प्रत्यबोधयत् ॥ ४५४ ॥ अन्येषामपि जन्तूनां पीडनं दुःखदायकं । किं पुनस्तन्मुनीनां ? यद्घोरश्वभ्रफल-
प्रदं ॥ ४५५ ॥ मुनिघातो हि जन्तूनां दीर्घसंसारकारणं । भवेच्च दुर्लभा बोधिरेवमुक्तं यदागमे ॥ ४५६ ॥

चेइयदव्वविणासे इसिघाये पवयणस्स उड्डाहे । संजइचउत्थभंगे मूलग्गी बोहिलाभस्स ॥ ४५७ ॥

इति राज्ञीवचः श्रुत्वा प्रबुद्धोऽथ धराधवः। निरवर्त्तिष्ट साधूपघातपातकपंकतः ॥ ४५८ ॥ पुनः सञ्जातवैरोऽयं कंचिद्
दृष्ट्वा मुनिं जगौ । रे रे निर्वास्यतामेष मातंगो मत्पुरान्तरात् ॥ ४५९ ॥ इत्यादिष्टा भटा यावन्मुनिं निर्वासयंति तं । ताव-

दयाः, श्रीमन्तोऽत्र गुणात्समुद्रगुरवो राजन्ति तेजःश्रिया ॥ ४९४ ॥ तत्पादद्वितयप्रसादवशतो वाग्देवताध्यानतो, दृब्धं पंडितसत्यराजगणिना स्वात्मस्मृतेर्हेतवे। यावच्चंद्रगभस्तिमेरुधरणीपाथोधराम्भोधयस्तावन्नन्दतु वाच्यमानमृषिभिः श्रीपालवृत्तं ह्यदः ॥ ४९५ ॥ श्रीविक्रमाद्विश्वतिथि(१५१४)प्रमिते वत्सरे किल । प्राकृताब्धेः समुध्धृत्यानुष्टुब्बन्धेन निर्ममे ॥ ४९६ ॥ जयतात्ताज्जिनेन्द्रस्य शासनं ये तथार्हतं । धर्ममाराधयन्त्येते जयन्तु पुरुषोत्तमाः ॥ ४९७ ॥ जयंतु गुरवस्तेऽपि श्रुतपीयूषसिन्धवः । यदुपासनयाऽनर्घ्यरत्नत्रितयमाप्यते ॥ ४९८ ॥

॥ इति श्रीसिद्धचक्रमाहात्म्योपरि श्रीश्रीपालनृपचरित्रं संपूर्ण ॥

नेऽस्मिन्नास्ति चारित्रं तव पुण्यवतां वर ! ॥ ४७८ ॥ किन्तु स्मरंस्त्वमेतान्यर्हदादीनि पदान्यलं । संप्राप्य नवमं स्वर्गं नव-संख्यान् भवानथ ॥४७९॥ उत्तरोत्तरसौख्याढ्यां प्राप्य स्वःसन्नृसंपदं । सिद्धिं च प्राप्स्यसीत्युक्त्वा विजहार मुनीश्वरः॥४८०॥ श्रीपालोऽप्यवनीपालः प्रियाभिर्नवभिर्युतः। सिद्धचक्रं समाराध्य विधिनोद्यापनं व्यधात् ॥४८१॥ अथो भुवनपालाद्याः सुतास्तस्य नवाऽभवन् । राज्ये नव सहस्राणि तस्यासन् रथहस्तिनां ॥ ४८२ ॥ नवलक्षास्तुरंगाणां पत्तीनां नवकोटयः । नववर्षशतान्येवं न्यायाद्राज्यमपालयत् ॥ ४८३ ॥ संस्थाप्य राज्ये भुवनपालं नवपदीं स्मरन् । समाधिमृत्युयोगेन नवमं कल्पमासवान् ॥ ४८४ ॥ स्नुषाभिर्नवभिर्युक्ता समये तज्जनन्यपि। आयुःक्षयेण तत्रैव देवत्वेनोदपद्यत ॥४८५॥ ततश्च्युत्वा चतुःकृत्वा प्राप्य सत्वाधिका अमी। देवत्वं मानुपत्वं च सम्प्राप्स्यंति शिवं क्रमात् ॥४८६॥ इत्येवं मगधेशस्य पुरः श्रीगौतमो विभुः। आख्याय विरतो यावत् तावत्कोऽपि नरेश्वरं ॥ ४८७ ॥ सद्यो वर्द्धापयामास श्रीवीरागमनेन वै । श्रीश्रेणिकनृपोऽप्यस्य तुष्टिदानं व्यतीतरत् ॥ ४८८ ॥ इति श्रीवीरनाथोऽपि पुनानः पृथिवीतलं । सुरासुरैः सेव्यमानस्तदुद्यानं व्यभूषयत् ॥ ४८९ ॥ समवसृतिमध्येऽथ रत्नसिंहासनस्थितः । व्यधत्त वीरनाथोऽपि देशनां क्लेशनाशिनीं ॥ ४९० ॥ ज्ञात्वा नृपस्य तं भावमर्हदादिपदावलीं। श्रीवीरोऽपि समाचख्यौ भव्यानुग्रहहेतवे ॥ ४९१ ॥ श्रीसिद्धचक्रमाहात्म्यविषयां धर्मदेशनां । श्रुत्वा के के जना नासंस्तदाराधनतत्पराः ? ॥ ४९२ ॥ एषा नवपदध्यानवती श्रीपालसंकथा । शृण्वतां गदतां नृणां करोतु सुखसन्ततिं ॥४९३॥ राकापक्षवलक्षपक्षविमलाः सद्वृत्तपुण्योज्ज्वलाः, शश्वच्छास्त्रसुधासमुद्रलहरीनिस्तन्द्रचन्द्रत्विषः। सूरिश्रीगुणसागराख्यसुगुरुप्रासप्रतिष्ठो-

निर्भर्त्सयामास दृष्ट्वा तत् श्रीमती नृपं ॥ ४६० ॥ अथ सानुशयो भूपोऽप्यानाय्य तमृषिं गृहे । निजागः क्षामयामास प्रणिपातपुरस्सरं ॥ ४६१ ॥ श्रीमत्याथ मुनिः पृष्टो विभो ! अज्ञानभावतः । कृत्वोपसर्गं साधूनां राज्ञा यद् दुष्कृतं कृतं ॥ ४६२ ॥ तत्पापशान्तये स्वामिन्नुपायं ब्रूहि कञ्चन । कृतेन येन भूपोऽयं सद्यश्छुटति पातकात् ॥ ४६३ ॥ मुनिर्जगाद श्रीसिद्धचक्राराधनमुत्तमं । नृपः करोतु तत्सद्यः पातकाद्विप्रमुच्यते ॥४६४॥ ततस्तपोविधानादिविधिपूजापुरस्सरं । श्रीमत्या सहितः सिद्धचक्रमाराधयन्नृपः ॥ ४६५ ॥ अन्वमोदि तपो राज्ञ्या वयस्याभिस्तदाष्टाभिः । प्रशंसितं क्षणं सप्तशतसंख्यैश्च सेवकैः ॥ ४६६ ॥ ते चान्यदा नृपादेशात् सिंहनामकभूभुजा । समं युद्ध्वा मृताः सप्तशतानि कुष्ठिनोऽभवन् ॥४६७॥ साधूपसर्गपापोत्थोऽमीषां कुष्ठामयोऽभवत् । श्रीकांतजीवस्तत्पुण्यप्रभावात्त्वं नृपोऽभवः ॥ ४६८ ॥ श्रीमत्या अपि जीवोऽयं जाता मदनसुन्दरी । जैनधर्मप्रभावेण सा राज्ञी च तवाभवत् ॥ ४६९ ॥ यत्त्वया मुनिवर्यस्य विहिताशातना तदा । कुष्ठित्वं वार्द्धिपतनं मातंगत्वं ततोऽभवत् ॥४७०॥ यच्चैष ऋद्धिविस्तारस्तवासीदखिलोऽप्यसौ । प्रसादः सिद्धचक्रस्य परिस्फुरति निश्चितं ॥४७१॥ यत् श्रीमत्या सखीभिश्च कृता तदनुमोदना । तेन पुण्येन ते क्षुल्लपट्टदेव्योऽभवन्निमाः ॥ ४७२ ॥ धर्मप्रशंसया सप्तशतसंख्यैश्च सेवकैः । यत्कर्मोपार्जि तेनैते सर्वे जाता निरामयाः ॥ ४७३ ॥ सिंहजीवस्त्वहं मासमेकं संपाल्य संयमं । जातोऽस्म्यजितसेनाख्यः शैशवे तव राज्यहृत् ॥ ४७४ ॥ प्राग्भवाभ्यासयोगेन चारित्रमिह चाप्तवान् । सोऽहं प्राप्तावधिज्ञानो नरेशात्र समागमं ॥ ४७५ ॥ एवं च यादृशं येन कृतं कर्म शुभाशुभं । अवश्यमेव भोक्तव्यं तत्तेन खलु तादृशं ॥ ४७६ ॥ इत्याकर्ण्य कुमारोऽपि भावविस्मेरमानसः । प्राह संयमदानेन विभो ! तारय मां भवात् ॥ ४७७ ॥ अथोवाच मुनिर्भूपमुदयाद्भोगकर्मणः । भ-

नीति प्रिया तस्य जिनधर्मैकमानसा ॥ ४४३ ॥ पापर्द्धिनिरतश्चाभूद्राजा संसर्गदोषतः । सान्यदा मधुरैर्वाक्यैर्भूभुजं प्रत्यबूबु-
धत् ॥ ४४४ ॥ यथा—वैरिणोऽपि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् । सदैव च तृणाहारा हन्यंते पशवः कथं ? ॥ ४४५ ॥
तृणानि खादंति वसन्त्यरण्ये पिबंति तोयान्यपरिग्रहाश्च। तथापि वध्या हरिणा नराणां को लोकमाराधयितुं समर्थः ? ॥४४६॥
मंतूण परप्पाणे अप्पाणं जे कुणंति सप्पाणं । अप्पाणं दिवसाणं कए स नासेइ अप्पाणं ॥ ४४७॥ इति राज्ञीवचोऽ-
न्योभिरप्यभि.. ना नृपः । मृगयामगमत्सप्तशतवंठैः सहान्यदा ॥ ४४८ ॥ वीक्ष्य धर्मध्वजकरं मुनिमेकं नृपोऽवदत् । कोऽ-
प्येष चामरकरः क्रुद्धि.. ऽत्र दृश्यते ॥ ४४९ ॥ नृपतुष्ट्यै अथोल्लुंठैर्वंठैस्तैर्दुष्टचेष्टितैः । उपद्रुतो मुनीन्द्रोऽसौ क्षमावॉल्लेष्टु-
यष्टिभिः ॥४५०॥ यथा यथा ताड्यतेऽसौ मुनिरस्य तथा तथा। प्रावर्द्धिष्ट रसः शान्तो हासाढ्यश्च नरेशितुः ॥ ४५१ ॥ भूयोऽ-
प्येकं मुनिं वीक्ष्य नदीकण्ठस्थितं नृपः । मैये शैवलिनीपंके पातयामास निष्कृपः ॥ ४५२ ॥ पुनः सञ्जातकारुण्यो मुनिमा-
कृष्य मुक्तवान् । को वेत्ति ? प्राणिनां भावपरावृत्तिं नवां नवां ॥ ४५३ ॥ वृत्तांतमेनमाचख्यौ स सर्वं स्त्रीपुरः स्वकं । सापि
तं मधुरैर्वाक्यैर्नृपतिं प्रत्यबोधयत् ॥ ४५४ ॥ अन्येषामपि जन्तूनां पीडनं दुःखदायकं । किं पुनस्तन्मुनीनां ? यद्घोरश्वभ्रफल-
प्रदं ॥ ४५५ ॥ मुनिघातो हि जन्तूनां दीर्घसंसारकारणं । भवेच्च दुर्लभा बोधिरेवमुक्तं यदागमे ॥ ४५६ ॥
चेइयदव्वविणासे इसिघाये पवयणस्स उड्डाहे । संजइचउत्थभंगे मूलग्गी बोहिलाभस्स ॥ ४५७ ॥
इति राज्ञीवचः श्रुत्वा प्रबुद्धोऽथ धराधवः। निरवर्त्तिष्ट साधूपघातपातकपंकतः ॥ ४५८ ॥ पुनः सञ्जातवैरोऽयं कंचिद्
दृष्ट्वा मुनिं जगौ । रे रे निर्वास्यतामेष मातंगो मत्पुरान्तरात् ॥ ४५९ ॥ इत्यादिष्टा भटा यावन्मुनिं निर्वासयंति तं । ताव-

जामात्रे दत्ता भूरिनटैः समं । कुटुंबं मिलितं मेऽद्य नृत्यंत्यास्त्वत्पुरोऽधुना ॥४२६॥ तदा निजगुरुत्वाच्च मदनाया विडंबनात्।
चक्रे गर्वमिदानीं तु फलं भुञ्जामि कर्मणः ॥ ४२७ ॥ एकैव सा महापुण्यवतीनां धुरि कीर्त्यते । ययात्मीयं कुलं शीलं सच्च-
रित्रैः पवित्रितं ॥ ४२८ ॥ अहं पुनरधन्यानां प्रथमा कीर्त्तिता बुधैः । कुलशीले परित्यज्याभवं दुःखैकभाजनं ॥ ४२९ ॥
अन्यच्च जिनधर्मोऽस्याः कल्पवृक्ष इवाफलत् । मिथ्याधर्मो मम पुनर्विषवृक्ष इवाभवत् ॥ ४३० ॥ ततोऽरिदमनं भूपोऽप्याहूय
सुरसुन्दरीं । तस्मै प्रदत्तवान् सोऽपि मिथ्याधर्मं त्रिधाऽत्यजत् ॥ ४३१ ॥ अथ सप्तशतीसंख्याः कुष्ठिनो मदनागिरा । गत-
रोगा भजंति स्म श्रीपालनृपशेखरं ॥ ४३२ ॥ अथायं पैतृकं राज्यं यावद्गन्तुमना अभूत् । मतिसागरमन्त्रीशस्तावदेत्य व्य-
जिज्ञपत् ॥ ४३३ ॥ बालोऽपि पितृपदे त्वं स्थापितोऽसि तदा प्रभो ! । येन चोत्थापितो राज्यात् स ते शत्रुर्न संशयः
॥ ४३४ ॥ सति सामर्थ्ययोगे यः पैत्र्यं राज्यमुपेक्षते । स लोके हसनीयः स्यात् तत्पुनीहि निजां पुरीं ॥ ४३५ ॥ अथ
तन्मंत्रिवचसा ससैन्यः स कुमारराट् । विजित्याजितसेनं तं चम्पाराज्यं च लब्धवान् ॥ ४३६ ॥ अथ प्रबोधमापन्नोऽजितसे-
ननृपोऽपि सः। सच्चारित्रं समादायावधिज्ञानमवाप्तवान् ॥४३७॥ अथ श्रीपालभूपोऽपि दत्वा तिस्रः प्रदक्षिणाः । प्रणम्य तं
महाभक्त्या विज्ञप्तिमिति चातनोत् ॥ ४३८ ॥ भगवन् ! कर्मणा केन बाल्येऽपि मम तादृशः । देहे महामयो जातः ? कर्मणा
केन शान्तवान् ? ॥ ४३९ ॥ स्थाने स्थाने चेदृगृद्धिं कर्मणा केन लब्धवान् ? । केन मग्नोंबुधौ ? केनान्त्यजत्वं चाहमाप्नुवं ?
॥ ४४० ॥ प्रसद्य भगवन् ! सद्यः संशयं मे निराकुरु । उदिते हि सहस्रांशौ न तमो बाधते जगत् ॥ ४४१ ॥ अथ प्राहाव-
धिज्ञानी शृणु श्रीपालभूपते !। हिरण्यपुरमस्त्यत्र श्रीकांतस्तत्र भूधवः ॥४४२॥ सत्यशीलपवित्रांगी गंगेव सरलाशया । श्रीम-

भणइ जाव । वच्छे ! सुलक्खणा तुह जीहा एयं हवउ एवं ॥ ९ ॥ ताव सिरिपाल राया पियाइ धम्मंमि निच्चलमणाए । नाऊण
सगरयणं दारंदारंति जंपइ ॥ १० ॥ कमलप्पभा पयंपइ नूणमिणं मज्झ पुत्तवयणंति । मयणावि भणइ जिणमयवयणाइं किमन्नहा
हुंति ? ॥ ११ ॥ उग्घाडियं दुवारं सिरिपालो नमइ जणणिपयजुगलं । दइयं च वियणपउणं संभासइ परमपिम्मेणं ॥ १२ ॥”

गत्वा पुर्यां कुमारेंद्रः सद्यो हारप्रभावतः । आरोप्य स्कन्धयोर्मातृजाये शिबिरमागतः ॥ ४१३ ॥ नत्वा स मातुश्चरणौ
स्ववृत्तमखिलं जगौ । मदनापि स्वजामीनामष्टानाममिलत्ततः ॥ ४१४ ॥ अथ दूतमुखाहूतः पृथ्वीपालोऽपि सांजसं । समागत्यो-
पदापाणिः श्रीपालनृपमानमत् ॥ ४१५ ॥ अथ प्रणम्य पितरं मदनैवं व्यजिज्ञपत् । तात ! यः कर्मणा दत्तो वरः सोऽयं
नृपोत्तमः ॥ ४१६ ॥ सौभाग्यसुन्दरीरूपसुन्दरीप्रमुखा अपि । स्वजनास्तत्र चाजग्मुस्तत्कौतुकदिदृक्षया ॥ ४१७ ॥ मिलितेषु
ततः सर्वस्वजनेषु समादिशन् । नृपो नाट्यविधिं मुख्या नोत्तिष्ठति नटी पुनः ॥ ४१८ ॥ अथ नाटकिनां तेषां कथंचित्प्रेरणा-
वशात् । दीर्घं निःश्वस्योत्थिता सा पद्यमेकमदोऽवदत् ॥ ४१९ ॥

किहां मालव किहां शंखपुर किहां बब्बर किहां नट्ट । सुरसुन्दरी नचावीयें पडो दैवाशिर दट्ट ॥ ४२० ॥

श्रुत्वेति सर्वे साशंकास्तामपृच्छन्निजां कथां । सा आख्यन्मालवेशस्य सुताहं सुरसुन्दरी ॥ ४२१ ॥ पितृदत्तारिदम-
नकुमारेण समं तदा । परिणीय समागच्छमहं शंखपुरान्तिकं ॥ ४२२ ॥ सुमुहूर्त्तकृते युष्मज्जामाता पूर्बहिः स्थितः । भट्टानां
परिवारस्तु स्वं स्वं सदनमासवान् ॥ ४२३ ॥ अत्रांतरे चौरधाटी पतिता बलवत्तरा । मुक्त्वा मामार्यपुत्रोऽसौ जीवं लात्वा
प्रणष्टवान् ॥ ४२४ ॥ चौरैर्धृत्वाहं विक्रीता द्वीपे बब्बरनामके । महाकालनरेशेन वरनाट्यं च शिक्षिता ॥ ४२५ ॥ तेनाप्यहं स्व-

न केनापि राधावेधो न निर्मितः ॥ ४०४ ॥ कुमारोऽप्येतदाकर्ण्य कर्णामृतसमं वचः । प्राप्य कोल्लाकनगरं राधावेधं चकार
च ॥ ४०५ ॥ ततोऽथ जयसुन्दर्यां कुमारो माररूपभाक् । महामहेन भूपोऽपि विवाहं कृतवांस्तयोः ॥ ४०६ ॥ तत्र स्थित-
मथ ज्ञात्वा कुमारं मातुलो नृपः । जामातरं स्वं सुप्रीत आजुहाव निजं पुरं ॥ ४०७ ॥ स्थित्वा तत्र कियत्कालं तत्रानाय्य
निजाः प्रियाः । समातुलोऽपि श्रीपालश्चचालोज्जयिनीं प्रति ॥ ४०८ ॥ आगच्छन्नंतरा सोपारकाद्वनगरेशितुः । महसेननरेशस्य
सुतां त्रैलोक्यसुन्दरीं ॥ ४०९ ॥ दष्टां दुष्टाहिना हारप्रभावात्समजीवयत् । नृपाग्रहेण तां तत्र पर्यणैषीत्कुमारराट् ॥ ४१० ॥
एवमष्टप्रियायुक्तः स्वमातुर्मिलनोद्यतः । सम्प्राप्य मालवं देशं निजसैन्यमवासयत् ॥ ४११ ॥ परचक्रागमं श्रुत्वा मालवेशोऽपि
तद्भयात् । विवेश दुर्गं सैन्येन परितः सोऽप्यवेष्टयत् ॥ ४१२ ॥
" ( आवासीए य सिन्ने रयणीए पढमजामसमयम्मि । हारप्पभावेण सयं राया जणणीगिहं पत्तो ॥ १ ॥ आवासदु-
वारि ठिओ सिरिपालनरेसरो सुणइ ताव । कमलप्पभा पयंपइ वहुयं पई एरिसं वयणं ॥ २ ॥ वच्छे ! परचक्केणं नयरी-
परिवेढिया समंतेणं । हल्लोहलिओ लोओ किं किं होही न याणामि ॥ ३ ॥ वच्छस्स तस्स देसंतरम्मि पत्तस्स वच्छरं जायं
। वच्छे ! कावि न लब्भइ अज्जवि सुद्धि तुह पियस्स ॥ ४ ॥ पभणेइ तओ मयणा मा मा माइं ! किंपि कुणसु भयं । नवपय-
झाणम्मि मणे ठियम्मि जं हुंति न भयाइं ॥ ५ ॥ जं अज्जंचिय संझासमए मह जिणवरिंदपडिमाए । पूयंतीए जाओ कोइ
अउव्वो सुहो भावो ॥ ६ ॥ तेणं चिय अज्जवि मह मणंमि नो माइं ! आणंदो । निक्कारणं सरीरे खगे खगे हाइ रोमंचो ॥ ७ ॥ अन्नं
च मज्ज वामं नयणं वामो पयोहरो चेव । तह फंदइ जह मन्ने अज्जेव मिलेइ तुह पुत्तो ॥ ८ ॥ तं सोउणं कमलप्पभावि आणंदिया

नं ॥ ३९० ॥ अन्यदाथ नरः कोऽपि सदः प्राप्य जगावदः । देव! दलपत्तनेऽस्मिन् धरापालाभिधो नृपः ॥ ३९१ ॥
तत्पुत्री जिनधर्मैकचित्ता शृंगारसुन्दरी । मत्यज्ञासीत्पुरः पंचसखीनामिति सान्यदा ॥ ३९२ ॥ वृणोमि जिनधर्मज्ञमेव नान्यं
वरं हलाः ! । ऊचुस्ता लक्ष्यते चित्तसमस्यापूरणात्स च ॥ ३९३ ॥ ततः सखीपंचकेन समस्यापंचकं ह्यसौ । अदी-
दयत भूपेभ्यो न च तत्कोऽप्यपूरयत् ॥ ३९४ ॥ तत् श्रुत्वागात्कुमारस्तत्पुरं हारप्रभावतः । शालभंजिकया सद्यः स-
मस्या अप्यपूरयत् ॥ ३९५ ॥

तद्यथा—'मणवंछियफलहोय'। अरिहंताइ नवपय नियमणु धरे जु कोय। निच्छइ तसु नरसेहरह मणुवंछियफल
होय ॥ ३९६ ॥ द्वितीया प्राह—'अवर म झंखो आल'। अरिहंत देव सुसाधु गुरु धर्म ते दयाविशाल। मंतुत्तमनवकार-
नर अवर म झंखो आल ॥ ३९७ ॥ तृतीया स्माह—'करि सफलुं अप्पाण'। आराहवि देवगुरु दिउ सुपत्तें दाण। तव-
संयमउवयार करिं करि सफलुं अप्पाण ॥ ३९८ ॥ चतुर्थी प्राह—'जित्तउ लिखिउ निलाडि'। अरे मण अप्पा खंचि
'गरि चिंताजाल म पाडी। फल तित्तउ पामीएं जित्तो लिखिउ निलाडि ॥३९९॥ पंचमी प्राह—'तसु तिहुयण जण दास'।
भवभवंतरसंचिउं पुण्ण सुनिम्मल जासु। तसु बल तसु सिरि तसु जस तसु तिहुयण जण दास ॥ ४०० ॥

पूरितासु समस्यासु पूर्णसन्धा कुमार्यपि। तत्कण्ठपीठे दक्षासौ चिक्षेप वरमालिकां ॥ ४०१ ॥ इतश्च मागधः
कोऽपि सभायामेत्यभूवित्वान् । देव ! कोल्लाकनगरे पुरन्दरनृपोऽस्ति यः ॥ ४०२ ॥ तत्पुत्र्या जयसुन्दर्या प्रतिज्ञातमिदं
किल । राधावेधविधौ दक्षो वरो मे नापरः पुनः ॥ ४०३ ॥ राज्ञाथ सर्वसामग्रीं कृत्वाहूता नृपांगजाः। परमेके-

तथासौ तत्र वीणाया दर्शयामास कौशलं । राजपुत्रीमुखः सर्वः परिवारोऽपि व्यस्मयत् ॥ ३७३ ॥ अथ पूर्णप्रतिज्ञासौ कुमारी
गुणसुन्दरी । वृणुते स्म कुमारं तं जगत्सारं तनुश्रिया ॥ ३७४ ॥ चिंतयंति नृपाद्यास्ते वामनोऽयं हहा ! वृतः । तावत्कुमारः
स्वं रूपं तेषामेषोऽप्यदीदृशत् ॥ ३७५ ॥ तद्रूपदर्शनात्तुष्टस्तस्मै कन्यां नृपोऽप्यदात् । रत्नस्वर्णादिदानं च चकार करमोचने
॥ ३७६ ॥ तत्र स्थितः कुमारोऽसौ समयं गमयन्सुखं । वैदेशिकेन केनाप्यन्यदेति ज्ञापितो मुदा ॥ ३७७॥ देव ! स्वर्णपुरे राजा
वज्रसेनोऽभिधानतः । त्रैलोक्यसुन्दरी तस्य पुत्री स्वःस्त्रीमनोहरा ॥ ३७८ ॥ अथ तस्याः कृते राज्ञा स्वयंवरणमण्डपं । प्रार-
भ्याकारिताः संति शतसंख्या नरेश्वराः ॥ ३७९ ॥ शुचिशुक्लद्वितीयायां लग्नं कल्ये च तद्दिनं । श्रुत्वेत्यगात्कुमारोऽपि कुब्ज-
रूपेण तत्पुरं ॥३८०॥ कुब्जं वीक्ष्य नृपाः प्रोचुः किमर्थं त्वं समागतः ?। सोऽप्याख्यद्यत्कृते यूयमागतास्तत्कृतेऽप्यहं ॥३८१॥
इत्थं नानाविधैर्वाक्यैर्हासयामास तानयं । अत्रान्तरे नृपसुताप्यारुह्य शिबिकां वरां ॥ ३८२ ॥ दधाना वाससी शुभ्रे स्वर्णरत्न-
विभूषणा । समागाद्बिभ्रती पाणौ स्वयंवरणमालिकां ॥ ३८३ ॥ दर्शितेषु प्रतीहार्या निखिलेष्वपि राजसु । स्वरूपस्थं कुमारं
तं दृष्ट्वासौ मुमुदेतरां ॥ ३८४ ॥ अत्रांतरे शालभंजीवदनाद्धारदेवता । प्राह विज्ञासि वत्से ! चेत्तदमुं कुब्जकं वृणु ॥ ३८५ ॥
यदि धन्यासि विज्ञासि जानासि च गुणांतरं । तदेनं कुब्जकाकारं वृणु वत्से ! नरोत्तमं ॥ ३८६ ॥ तत् श्रुत्वा कुब्जरूपोऽ-
पि वृतो यावत्तदैतया । उदायुधा नृपास्तावत्तं कुब्जं पर्यवेष्टयन् ॥ ३८७ ॥ क्षणाज्जिगाय तानेष कुब्जोऽपि स्वभुजौजसा । तद्
दृष्ट्वा वज्रसेनोऽपि कुब्जकं तमदोऽवदत् ॥ ३८८ ॥ त्वया यथा कुमारेंद्र ! प्रादुश्चक्रे निजं बलं । तथा रूपमपि स्वीयं
प्रकाश्यास्मान् प्रमोदय ॥ ३८९ ॥ तथाकृते कुमारेण भूपोऽप्यस्मै निजांगजां । दत्वा प्रधानावसथे स्थापयामासिवांश्च

॥ ३५५ ॥ सोऽप्याख्यदागतः कांत्याः कम्बुद्वीपं व्रजामि च। दृष्टं यदंतराश्चर्यं तत्कुमार ! निशम्यतां ॥ ३५६ ॥ इतोऽस्ति योजनशते कुण्डलाख्यपुरे नृपः। मकरकेतुस्तद्राज्ञी कर्पूरतिलकाभिधा ॥ ३५७ ॥ तयोर्बहुषु पुत्रेषु सुताऽभूद्गुणसुन्दरी। सा च सर्वकलादक्षा वीणावाद्ये विशेषतः ॥ ३५८ ॥ प्रत्यज्ञासीदिदं सा चान्यदा वीणाविधौ हि मां। विजेता वरणीयो यः स एव हि वरो मया ॥ ३५९ ॥ तत् श्रुत्वा तत्र सम्प्राप्ता राजपुत्रा अनेकशः। वीणाभ्यासं प्रकुर्वंति तत्पाणिग्रहहेतवे ॥ ३६०॥ परं न जीयते केनाप्यसौ वीणाविशारदः। त्वं चेज्जेष्यासि राजंस्तां तत्तवैव भविष्यसौ ॥ ३६१ ॥ इत्याकर्ण्य कुमारोऽपि दिदृक्षुस्तत्कुतूहलं। कृत्वा नवपदध्यानं यावत्सुप्तोऽस्ति तावता ॥३६२॥ सौधर्मवासी श्रीसिद्धचक्राधिष्ठायकः सुरः। विमलेशः समागत्य कुमारंप्रत्यदोऽवदत् ॥ ३६३ ॥ इच्छाकृतिर्व्योमगतिः कलासु, प्रौढिर्जयः सर्वविषापहारः। कंठस्थिते यत्र भवत्यवश्यं, कुमार ! हारं तदमुं गृहाण ॥ ३६४ ॥ वदन्नेवं कुमारस्य कंठे हारं निवेश्य सः। स्वस्थानेऽगात्कुमारोऽपि तत्क्षणात्कुंडलं पुरं ॥ ३६५ ॥ कृतवामनरूपोऽसौ हारस्यास्य प्रभावतः। वीणाभ्यासं प्रकुर्वाणः कं कं हासयति स्म न? ॥ ३६६ ॥ तत्राथ लेखशालायामभ्यस्यंति नृपाङ्गजाः। वीणावाद्यं च सोऽप्येषां मध्येऽभ्यासं करोति च ॥ ३६७ ॥ उपाध्यायं वशीकृत्य वीणामादाय वादयन्। तत्तंत्रीं त्रोटयामास स्फोटयामास तुम्बकं ॥ ३६८ ॥ वैपरीत्येन गृह्णंश्च वीणां हास्यं प्रवर्द्धयन्। जनैर्निवार्यमाणोऽपि तां क्रीडां स मुमोच न ॥ ३६९ ॥ प्रतिमासं सदस्येते स्वं स्वं वीणासु कौशलं। नृपाङ्गजायाः पुरतो दर्शयंति नृपाङ्गजाः ॥ ३७० ॥ गच्छत्सु तेषु सर्वेष्वेकदा तत्रैव वामनः। लोकैर्विहस्यमानोऽपि कुमार्याः पुर आगमत् ॥ १७१ ॥ स्वरूपदर्शनेनासौ कुमार्या रागमुत्कटं। वामनत्वेन लोकानां हास्यमेवमवीवृधत् ॥ ३७२ ॥

चिन्तयंत्योरित्यनयोर्यज्जातं तन्निशम्यतां । क्षणाज्जलेनोल्लुलितं पवनेन च जृम्भितं ॥ ३०३ ॥ उन्नतं मेघमालाभिर्द्योतितं विद्युतापि च । प्रसृतं घोरतमसा रौद्रशब्दैः समुत्थितं ॥ ३०४ ॥ प्रवृत्तं चाट्टहासेनेत्युत्पाताः शतशोऽभवन् । तद् दृष्ट्वा धवलः श्रेष्ठी भयभ्रान्तमना अभूत् ॥ ३०५ ॥ उच्चैः कोलाहलाक्रान्ते सांयात्रिकजने तदा । चक्रेश्वरी प्रादुरासीत्सच्चक्रं बिभ्रती करे ॥ ३०६ ॥ तदादिष्टः क्षेत्रपालस्तं दुर्बुद्धिप्रदायकं । उद्बध्य कूपस्तंभेऽथ गतासुं चक्रिवान् क्षणात् ॥ ३०७ ॥ धवलो भयभीतः सन् स्त्रियोः शरणमाश्रितः । मा कार्षीः पुनरित्युक्त्वा विमुक्तश्चक्रयाप्यसौ ॥ ३०८ ॥ अथो जगाद मदने प्रीता चक्रेश्वरी सुरी । मासांते बहुलक्ष्मीयुक् सङ्गमिष्यति वां पतिः ॥ ३०९ ॥ न कार्यस्तन्मनाक् खेदो मनसीति निगद्य सा । कल्पवृक्षस्रजं कंठेऽक्षिपन्मदनयोस्तयोः ॥ ३१० ॥ अस्याः स्रजोऽनुभावेन दुष्टाद्रक्ष्यन्ति वां न हि । इत्युदित्वा तिरोऽधत्त क्षणाच्चक्रेश्वरी सुरी ॥ ३११ ॥ त्रयोऽप्यथ वयस्यास्ते प्राहुःस्म धवलं प्रति । दृष्टं कुबुद्धिदातॄणां फलमत्रैव जन्मनि ॥ ३१२ ॥ अनयोः शरणं प्राप्य छुटितोऽसि भवानपि । पापं कुर्वन् पुनः श्रेष्ठिन् ! लप्स्यसेऽनर्थसन्ततिं ॥ ३१३ ॥ अथाब्धौ वहमानेषु यानेषु निखिलेष्वपि । कियत्स्वपि दिनेष्वेष पुनरेवमचिन्तयत् ॥ ३१४ ॥ अहो ! पुण्योदयो यन्मे स्वायत्ता श्रीरसावभूत् । मन्येते चेत्स्त्रियौ मां तत् सौभाग्योपरि मञ्जरी ॥ ३१५ ॥ विचिंत्येति तयोः पार्श्वे प्रेषयामास चेटिकां । सापि निर्भर्त्सिता ताभ्यां ततः स्वयमगादसौ ॥ ३१६ ॥ मालाप्रभावतो यावन्मदने नैष पश्यति । कुट्टयित्वा स दासीभिस्तावन्निर्वासितो गृहात् ॥ ३१७ ॥ इतश्च तानि यानानि नीयमानानि वर्त्मना । पवनप्रातिकूल्येन सम्प्रापुः कौंकणं तटं ॥ ३१८ ॥ धवलोऽप्युपदापाणिरुपागच्छन्नरेश्वरं । स्थगीधरेण ताम्बूलं भूपोऽप्यस्मै व्यतीतरत् ॥ ३१९ ॥ श्रीपालः श्रेष्ठिनं वीक्ष्य तत्क्षणात्समलक्षयत् ।

ततस्त्वं नायको भावी स्त्रीणां श्रीणां च निश्चितं। इत्युक्ते तेन तत्कार्यं श्रेष्ठी सिद्धममन्यत॥ २८५॥ अथान्यदा कौतुकार्थं तमारो-
प्योच्चमंचके । तेन कूटप्रयोगेण पातयामास सोऽम्बुधौ ॥ २८६ ॥ निपतन् सहसा सोऽप्यर्हदादीन् ध्यायति स्म च । तत्प्र-
भावान्मीनपृष्ठे स्थितः कौंकणमाप्तवान् ॥ २८७ ॥ कस्मिन्नपि वने तत्र चम्पकाख्यतरोस्तले । सुप्तो जजागार यावद्दर्श
परितो भटान् ॥ २८८ ॥ तैर्विज्ञप्तं विभो ! स्थानाभिधानपुरवासिना । वसुपालनृपेणामी त्वत्कृते प्रेषिता वयं ॥ २८९ ॥ यद्-
स्माभिस्त्वमेवात्र यथोक्तगुणशोभितः । दृष्टोऽसि तत्समागच्छ समारुह्य तुरंगमं ॥ २९० ॥ तत्र प्राप्तः कुमारोऽपि सर्वारोपित-
विस्मयः । अभिगम्य नृपेणापि दानमानैश्च पूजितः ॥ २९१ ॥ उक्तवानेकदा प्राप्तः कश्चिन्नैमित्तिकाग्रणीः। पुत्र्या मदनमञ्जर्याः
पृष्टश्च वरदेतवे ॥ २९२ ॥ तेनोक्तं सितवैशाखदशम्यां जलधेस्तटे । छायातरुतले सुप्तः सोऽस्या भावी ध्रुवं वरः ॥ २९३ ॥
आनीतोऽस्येतदर्थं तत् पुत्र्याः पाणिग्रहं कुरु । इत्युदित्वा नृपश्चक्रे विवाहं वरकन्ययोः ॥ २९४ ॥ देशग्रामपुरादीनि ददतोऽपि
नृपादसौ । स्थगीधरपदं स्वस्य सम्प्रार्थ्य लब्धवांस्ततः ॥ २९५ ॥ इतश्च धवलश्रेष्ठी सांयात्रिकनृणां पुरः । हा दैव ! किं
त्वया चक्रेऽस्मन्मभोरीदृशी दशा ॥ २९६ ॥ वदन्नेवं शुचाक्रान्तो हृदयं कुट्टयन् भृशं । विललाप स भूयोऽपि लोकप्रत्ययहेतवे
॥ २९७ ॥ तत् श्रुत्वा मदने हाहारवं भूमौ निपेततुः। कथंचिल्लब्धचैतन्ये सोरस्ताडं विलेपतुः ॥ २९८॥ धवलोऽपि तदागत्या-
वदन्मधुरया गिरा । भद्रे ! मा कुरुतं खेदं शोच्यते न मृतं गतं ॥ २९९ ॥ स तावद्युवयोः स्वामी युवां मुक्त्वा गतो यदि ।
तथा पुनरप्ययोऽहं भावी वां प्राणवल्लभः ॥ ३०० ॥ इति श्रुतिकटुप्रायं वाक्यमाकर्ण्य दुःश्रवं । विशेषाद् दुःखभाजिन्यौ
दध्यतुर्मनसीति ते ॥ ३०१ ॥ ध्रुवमेतेन पापेनाकार्यऽकार्यमिदं यतः। भुज्यते यादृगुद्गारस्तादृक्ष एव निश्चितं ॥ ३०२ ॥

वनिते मम । कुलं पृच्छ क्षमानाथ ! यदि ते संशयोऽस्त्ययं ॥ ३३८ ॥ पप्रच्छ धवलं राजा त्वद्याने वनितायुगं । किमस्ति सोऽपि विच्छायस्तत्क्षणान्न्यग्मुखोऽभवत् ॥ ३३९ ॥ नृपादिष्टैर्नरैस्ते द्वे आनिन्ये तत्क्षणादपि । अप्येते निजभर्त्तारं वीक्ष्य स्वांते जहर्षतुः ॥ ३४० ॥ अथ पृष्टा नरेंद्रेण विद्याधरसुता जगौ । कुमारचरितं सर्वं जगदाश्चर्यकारकं ॥३४१॥ राजा प्रोवाच तन्नूनं ममैव भगिनीसुतः । सकुटुम्बोऽपि मातंगो राज्ञा रुष्टेन ताडितः ॥ ३४२ ॥ सोऽप्याह सर्वमप्येतत्सार्थवाहेन कारितं । अस्माभिर्धनलोभान्धैस्तत्प्रभो ! क्षम्यतामिदं ॥ ३४३ ॥ रुष्टो नृपः श्रेष्ठिनं तं वधाय समुपादिशत् । कुमारोऽमूमुचत्तं च सन्तः सर्वत्र सकृपाः ॥ ३४४ ॥ मातंगाधिपतां पृष्टः राज्ञा नैमित्तिकोऽवदत् । मातंगा हस्तिनस्तेषामधिपोऽयं भविष्यति ॥ ३४५ ॥ ततो विसृष्टः सत्कृत्य नैमित्तिकशिरोमणिः । जामातरं च जामेयं श्रीपालं बह्वमन्यत ॥ ३४६ ॥ कुमारोऽप्येष धवलं नीत्वा निजनिकेतने । स्वगेहचन्द्रशालायां स्थापयामास मानदः ॥ ३४७ ॥ तत्र सुप्तोऽन्यदा रात्रौ कुमारघातं चिन्तयन् । आरुह्य सप्तमीं भूमिं यावद्घातार्थमुद्यतः ॥ ३४८ ॥ तावत्तदुत्थपापेन पातितः प्राप पापभाक् । विहाय सप्तमीं भूमिं सप्तमीं नरकावनिं ॥ ३४९ ॥ लोकोऽपि तं तथावस्थं प्रातर्वीक्ष्य मिथोऽवदत् । नूनमत्युग्रपापानां फलमत्रैव दृश्यते ॥ ३५० ॥ यच्चिंत्यते परस्मिन् हि तत्स्वस्यैवाधिगच्छति । कुमारे चिन्तितो द्रोहः श्रेष्ठिन्येव यथाभवत् ॥ ३५१ ॥ तच्चरित्रं कुमारोऽपि ध्यायन् शोकात्सगद्गदः । तत्प्रेतकृत्यं कृत्वाथ ददौ तस्मै जलाञ्जलिं ॥ ३५२ ॥ धवलस्य च त्रयो येऽभूवन् सद्बुद्धिदायकाः । सर्वश्रीणां कुमारेण तेऽधिकारे नियोजिताः ॥ ३५३ ॥ कुमारोऽथान्यदा राजपाटिकार्थं विनिर्गतः । सार्थवाहं पुरः कश्चिद् दृष्ट्वा पप्रच्छ चेति तं ॥ ३५४ ॥ कुतस्त्वमागतः ? कुत्र गमिष्यसि ? च सार्थप ! । नानादेशभ्रमात्प्राप्तमाश्चर्यं ब्रूहि किंचन

चिन्तयामासिवानेवं श्रीपालं वीक्ष्य श्रेष्ठ्यपि ॥ ३२० ॥ श्रीपालोऽयं किमथवा ? कोऽप्यन्यः ? सदृशोऽमुना । कुतोऽपि ज्ञात-नन्दनः श्रेष्ठी वज्राहतोऽभवत् ॥३२१॥ नृपजामातरं तं स ज्ञात्वा श्रेष्ठी गृहं ययौ । मातङ्गानां कुलं तावत् तत्रागाद् गानहेतवे ॥ ३२२ ॥ चिन्तातुरो यावदसावेभ्यः किंचिद्ददाति न । तावत्तैर्गदितं स्वामिन् ! किं रुष्टोऽस्मासु वर्त्तसे ? ॥ ३२३ ॥ अथाकार्य रहस्येकं श्रेष्ठी मातंगमूचिवान् । हंसि केनाप्युपायेन नृपजामातरं यदि ॥ ३२४ ॥ वितरामि तदा नूनं सर्वं त्वन्मुखमार्गितं । गृहाण कार्यसिद्ध्यर्थमर्द्धलक्षमितं धनं ॥ ३२५ ॥ प्रतिपद्य तदेषोऽपि सकुटुम्बो नृपांतिके । चक्रे गानं नृपोऽप्यस्मै स ताम्बूलमदापयत् ॥ ३२६ ॥ तदैका वृद्धमातंगी कुमारगलकन्दले । लगित्वा कुत्र पुत्र ? त्वमित्युक्त्वा व्यलपद्बहु ॥ ३२७ ॥ हा वत्स ! कियतः काला-न्मिलितोऽसि ममाधुना । कुत्र भ्रांत इयत्कालं ? शोधितोऽसि पदे पदे ॥ ३२८ ॥ मातंगोऽप्यवदत्स्वामिन् ! लघुभ्राता ममास-कौ । युष्मत्पार्श्वस्थितः सम्प्रत्यस्माभिश्चोपलक्षितः ॥ ३२९ ॥ एकाऽवोचन्मम भ्राता भ्रातृव्योऽस्यपराऽवदत् । देवरोऽस्यपरो-वाच पुण्यैः प्राप्तोऽसि साम्प्रतं ॥ ३३० ॥ दध्यौ नृपो हहानेन कुलं मम कलंकितं । तदेष कुत्र हन्तव्यः पापभाजां शिरोमणिः ॥३३१॥ नृपो नैमित्तिकं प्राह किमयं दुर्मते ! त्वया । मातंगो न ममाख्यातस्तद्वध्योऽसि त्वमप्यरे ॥ ३३२ ॥ नृपं नैमित्तिकोऽवोचन् मातंगो नैष नाथ ! हे । किंतु मातंगनाथोऽयं भविष्यति न संशयः ॥ ३३३ ॥ गाढं रुष्टो नृपोऽप्येतौ वधार्थं यावदादिशत् । व्यजिज्ञपदिदं तावन्नृपं मदनमञ्जरी ॥ ३३४ ॥ आचारेण कुलं ज्ञेयमिदं लोकेऽपि गीयते । लोकोत्तरस्तदाचारः कोऽप्यपूर्वोऽत्र दृश्यते ॥३३५॥ नृपः प्राह कुमारं भोः ! प्रकाशय निजं कुलं । सोऽप्याचख्यौ जलं पीत्वा गृहं किं पृच्छ्यते ? नृप ! ॥३३६॥ सैन्यं सज्जय यथा मे भुजौ निगदतः कुलं । स्वजिह्वया स्ववंशस्य वर्णनं यत् त्रपाकरं ॥३३७॥ यद्वा प्रवहणान्तःस्थे आनीय

चिन्तयंत्योरित्यनयोर्यज्जातं तन्निशम्यतां । क्षणाज्जलेनोल्लुलितं पवनेन च जृम्भितं ॥ ३०३ ॥ उन्नतं मेघमालाभिर्द्योतितं विद्युतापि च । प्रसृतं घोरतमसा रौद्रशब्दैः समुत्थितं ॥ ३०४ ॥ प्रवृत्तं चाट्टहासेनेत्युत्पाताः शतशोऽभवन् । तद् दृष्ट्वा धवलः श्रेष्ठी भयभ्रान्तमना अभूत् ॥ ३०५ ॥ उच्चैः कोलाहलाक्रान्ते सांयात्रिकजने तदा । चक्रेश्वरी प्रादुरासीत्सचक्रं बिभ्रती करे ॥ ३०६ ॥ तदादिष्टः क्षेत्रपालस्तं दुर्बुद्धिप्रदायकं । उद्बध्य कूपस्तंभेऽथ गतासुं चक्रिवान् क्षणात् ॥ ३०७ ॥ धवलो भयभीतः सन् स्त्रियोः शरणमाश्रितः । मा कार्षीः पुनरित्युक्त्वा विमुक्तश्चक्रयाप्यसौ ॥ ३०८ ॥ अथो जगाद मदने भीता चक्रेश्वरी सुरी । मासांते बहुलक्ष्मीयुक् सङ्गमिष्यति वां पतिः ॥ ३०९ ॥ न कार्यस्तन्मनाक् खेदो मनसीति निगद्य सा । कल्पवृक्षस्रजं कंठेऽक्षिपन्मदनयोस्तयोः ॥ ३१० ॥ अस्याः स्रजोऽनुभावेन दुष्टाद्रक्ष्यन्ति वां न हि । इत्युदित्वा तिरोऽधत्त क्षणाच्चक्रेश्वरी सुरी ॥ ३११ ॥ त्रयोऽप्यथ वयस्यास्ते प्राहुःस्म धवलं प्रति । दृष्टं कुबुद्धिदातॄणां फलमत्रैव जन्मनि ॥ ३१२ ॥ अनयोः शरणं प्राप्य छुटितोऽसि भवानपि । पापं कुर्वन् पुनः श्रेष्ठिन् ! लप्स्यसेऽनर्थसन्ततिं ॥ ३१३ ॥ अथाब्धौ वहमानेषु यानेषु निखिलेष्वपि । कियत्स्वपि दिनेष्वेष पुनरेवमचिन्तयत् ॥ ३१४ ॥ अहो ! पुण्योदयो यन्मे स्वायत्ता श्रीरसावभूत् । मन्येते चेत्स्त्रियौ मां तत् सौभाग्योपरि मञ्जरी ॥ ३१५ ॥ विचिंत्येति तयोः पार्श्वे प्रेषयामास चेटिकां । सापि निर्भर्त्सिता ताभ्यां ततः स्वयमगादसौ ॥ ३१६ ॥ मालाप्रभावतो यावन्मदने नैष पश्यति । कुट्टयित्वा स दासीभिस्तावन्निर्वासितो गृहात् ॥ ३१७ ॥ इतश्च तानि यानानि नीयमानानि वर्त्मना । पवनप्रातिकूल्येन सम्प्रापुः कौंकणं तटं ॥ ३१८ ॥ धवलोऽप्युपदापाणिरुपागच्छन्नरेश्वरं । स्थगीधरेण ताम्बूलं भूपोऽप्यस्मै व्यतीतरत् ॥ ३१९ ॥ श्रीपालः श्रेष्ठिनं वीक्ष्य तत्क्षणात्समलक्षयत् ।

इत्युक्ते तेन तत्कार्यं श्रेष्ठी सिद्धममन्यत॥ २८५॥ अथान्यदा कौतुकार्थं तमारो-
नस्त्वं नायको भावी स्त्रीणां श्रीणां च निश्चितं। इत्युक्ते तेन तत्कार्यं श्रेष्ठी सिद्धममन्यत ॥ निपतन् सहसा सोऽप्यर्हदादीन् ध्यायति स्म च । तस्म-
प्योग्रमंचकं । तेन कूटप्रयोगेण पातयामास सोंऽबुधौ ॥ २८६ ॥ कस्मिन्नपि वने तत्र चम्पकाख्यतरोस्तले । सुप्तो जजागार यावद्ददर्श
भावान्मीनपृष्ठे स्थितः कोंकणमाप्तवान् ॥ २८७ ॥ तांविज्ञप्तं विभो ! स्थानाभिधानपुरवासिना । वसुपालनृपेणामी त्वत्कृते प्रेषिता वयं ॥ २८९ ॥ यद-
परितो भटान ॥ २८८ ॥ तांविज्ञप्तं विभो ! स्थानाभिधानपुरवासिना । दृष्टोऽसि तत्समागच्छ समारुह्य तुरंगमं ॥ २९० ॥ तत्र प्राप्तः कुमारोऽपि सर्वारोपित-
स्माभिस्त्वमेवात्र यथोक्तगुणशोभितः । दृष्टोऽसि तत्समागच्छ समारुह्य तुरंगमं ॥ २९१ ॥ उक्तवानेकदा प्राप्तः कश्चिन्नैमित्तिकाग्रणीः। पुत्र्या मदनमञ्जर्याः
विस्मयः । अभिगम्य नृपेणापि दानमानैश्च पूजितः ॥ २९१ ॥ छायातरुतले सुप्तः सोऽस्या भावी ध्रुवं वरः ॥ २९३ ॥
पृष्टश्च वरहेतवे ॥ २९२ ॥ तेनोक्तं सितवैशाखदशम्यां जलधेस्तटे । छायातरुतले सुप्तः ॥ २९४ ॥ देशग्रामपुरादीनि ददतोऽपि
आनीतोऽस्येनदर्थं तत् पुत्र्याः पाणिग्रहं कुरु । इत्युदित्वा नृपश्चक्रे विवाहं वरकन्ययोः ॥ २९४ ॥ देशग्रामपुरादीनि ददतोऽपि
नृपाद्मौ । स्थगीधरपदं स्वस्य सम्प्रार्थ्य लब्धवांस्ततः ॥ २९५ ॥ इतश्च धवलश्रेष्ठी सांयात्रिकनृणां पुरः । हा दैव ! किं
त्वया नक्रेऽस्मत्प्रभोरीदृशी दशा ॥ २९६ ॥ वदन्नेवं शुचाक्रान्तो हृदयं कुट्टयन् भृशं । विललाप स भूयोऽपि लोकप्रत्ययहेतवे
॥ २९७ ॥ तत् श्रुत्वा मदने हाहारवं भूमौ निपेततुः। कथंचिल्लब्धचैतन्ये सोरस्ताडं विलेपतुः ॥२९८॥ धवलोऽपि तदागत्या-
वदन्मधुरया गिरा । भद्रे ! मा कुरुतं खेदं शोच्यते न मृतं गतं ॥ २९९ ॥ स तावद्युवयोः स्वामी युवां मुक्त्वा गतो यदि ।
तथा पुनरप्येषोऽहं भावी वां प्राणवल्लभः ॥ ३०० ॥ इति श्रुतिकटुप्रायं वाक्यमाकर्ण्य दुःश्रवं । विशेषाद् दुःखभाजिन्यौ
दध्यतुर्मनसीति ते ॥ ३०१ ॥ ध्रुवमेतेन पापेनाकार्यऽकार्यमिदं यतः। भुज्यते यादृगुद्गारस्तादृक्ष एव निश्चितं ॥ ३०२ ॥

तद्वृत्तमपि चाशेषं नृपपृष्टो मुनिर्जगौ ॥ २६७ ॥ श्रुत्वा तत्कुलनामादि विशेषाद् हृष्टमानसः । नृपः प्रदत्तवांस्तस्मै कुमाराय
निजां सुतां ॥ २६८ ॥ नृपप्रदत्तावासेऽथ प्रियाद्वययुतः स्थितः । सिद्धचक्रस्मृतिं कुर्वन् सुखमास्ते कुमारराट् ॥ २६९ ॥
अन्यदा स्थानमासीनं नृपं कोऽपि व्यजिज्ञपत् । एकेन सार्थपेनात्र शुल्कं भग्नं विभो ! तव ॥ २७० ॥ स चापराधी बद्धो-
ऽस्ति दंडः कोऽस्य विधीयते । सोऽपि भ्रूक्षेपमात्रेण तं वधाय समादिशत् ॥ २७१ ॥ एवमश्रद्दधानेऽथ कुमारे भूपतिस्तकं ।
यावदानाययत्तावत्स कुमारेण लक्षितः ॥ २७२ ॥ धवलश्रेष्ठिनं तं स नृपादेशादमोचयत् । सापराधेष्वपि प्रायः साधवः स्यु-
र्दयापराः !! २७३ ॥ कियतोऽथ दिनान् स्थित्वा कुमारः श्वशुरालये । धवलश्रेष्ठिना युक्तश्चचाल स्वपुरंप्रति ॥ २७४ ॥
धवलोऽथ कुमारर्द्धिं पत्नीयुग्मं तथास्य च । दृष्ट्वा चलचित्तोऽभूत् किमकार्यं हि लोभिनां ॥ २७५ ॥ सोऽपि तन्निजमा-
कूतं चतुर्मित्रैरमंत्रयत् । त्रयः सुबुद्धिदास्तेऽथ धवलं प्रत्यबोधयन् ॥ २७६ ॥ अन्यस्यापि न युज्येत धनस्त्रीहरणं नृणां ।
प्रभोस्तद्वांछका ये तु ते स्वामिद्रोहपापिनः ॥ २७७ ॥ यद्यानचालनं यच्च महाकालाद्विमोचनं । विद्याधरेंद्राच्च सखे ! विस्मृतं
किं तवाधुना ? ॥ २७८ ॥ एवंविधोपकारैककारिण्यपि नरोत्तमे । यद् द्रोहबुद्धिस्तन्नूनं पिशुनस्यैव लक्षणं ॥ २७९ ॥
अन्यच्च न त्वं धवलो लेश्यया कृष्णयानया । अतः परं तु नास्माकं त्वयालापो हि युज्यते ॥ २८० ॥ इत्युदित्वा त्रयोऽप्येते
ययुर्निजनिजास्पदं । वक्रस्वभावस्तुर्योऽथ श्रेष्ठिनः पार्श्वमाश्रितः ॥२८१॥ उवाच च विपक्षा हि श्रेष्ठिन्नेते त्रयोऽपि ते । पश्याहं
साधयाम्येष तत्क्षणात्तव चिन्तितं ॥ २८२ ॥ श्रेष्ठ्यप्युवाच सत्यं त्वं मदर्थं साधयिष्यसि । तथापि ब्रूहि मित्रात्र कोऽप्युपा-
यो विधीयते ? ॥२८३॥ सोऽप्याह बद्धमंचेऽस्मिन् गुणाधारेण मंडिते । आरोप्यैनं गुणच्छेदात् पातयिष्ये महार्णवे ॥२८४॥

यथा—दोस न कांइ कुमरी इह नरवर दोस न कोइ । जिग कारणि जिगहर जडिओ तं निसुणउ सहु कोइ ॥ २५० ॥ जसु नर दिठइ होइसे जिगहरमुक्कदुवारु । सोइज मयगमंजूसिय होइसइ भरतार ॥ २५१ ॥ सिरिरिसहर ओलगणी हुं चक्केसरी देवि । मासभिंतर तसु नरह आणिसु निच्चल लेवि ॥ २५२ ॥ यद्दृष्ट्या जिनगेहस्य द्वारमुद्धटयिष्यति । ध्रुवं मदनमञ्जूषायोग्यो भावीवरोऽप्यसौ ॥ २५३ ॥ श्रीमद्युगादिनाथांह्रिभक्ता चक्रेश्वरी जगौ । मासांतस्तमिहानेष्ये विवेगा नाऽभूनिस्ततः ॥ २५४ ॥ तद्द्वारोद्घाटने सर्वैरपि यत्नो विनिर्ममे । स च सर्वोऽपि संजातोऽस्त्यवकेशीव निष्फलः ॥ २५५ ॥ पुरुषोत्तम! तच्चेत्त्वं द्वारमुद्घाटयिष्यसि । ध्रुवं चक्रेश्वरीवाणी तन्मासान्तर्मिलिष्यति ॥ २५६ ॥ तदाकर्ण्य कुमारोऽपि तत्रागान्नृपपरिच्छदः । दृष्टे तस्मिन् झटित्येव द्वारमुज्जघटेऽथ तत् ॥ २५७ ॥ ततः सर्वेऽपि सन्तुष्टा नृपामात्यादयो जनाः । नत्वा कुमारं पप्रच्छुर्निजवंशाभिधादिकं ॥ २५८ ॥ स्वमुखेन स्ववंशादिवर्णनं क्रियते कथं ? । इति स चिन्तयामास चारणर्षिस्तदागमत् ॥ २५९ ॥ तं वंदित्वा नृपाद्येषु निपण्णेषु यथाक्रमं । चारणश्रमणश्चक्रे देशनां क्लेशनाशिनीं ॥ २६० ॥ धर्मः सम्यक्त्वमूलोऽयं तनु तत्त्वत्रयात्मकं । सद्देवगुरुधर्माश्च तत्त्वानीति विदुर्जिनाः ॥ २६१ ॥ प्रत्येकं तेऽथ विज्ञेयाः क्रमाद् द्वित्रिचतुर्विधाः । अर्हत्सिद्धभेदभिन्नं देवतत्त्वं प्रकीर्त्तितं ॥ २६२ ॥ गुरुतत्त्वेऽपि भेदा आचार्योपाध्यायसाधवः । धर्मोऽपि दर्शनज्ञानचारित्रतपोऽभिधः ॥ २६३ ॥ यद्वैतान्येव नवसु दृष्टिवादोऽप्यवातरत् । तद्भक्त्याराधनीयानि पदानि तानि सर्वदा ॥ २६४ ॥ एतदाराधनात्कांतिकीर्तिसौभाग्यसिद्धयः । इहलोकेऽपि जायन्ते श्रीपालस्येव निश्चितं ॥ २६५ ॥ राजापृच्छन्मुने ! कोऽयं ? श्रीपालोऽनेन वा कथं ? । सिद्धचक्रं समाराध्य प्राप्तमत्रैव सत्फलं ॥ २६६ ॥ तं नृपाय समाचख्यौ मुनिः स्वकरसंज्ञया ।

त्वदायत्तं राज्यं प्राणाः श्रियोऽपि मे । तथापि यासौ मदनसेना नाम्ना ममांगजा ॥ २३२ ॥ प्रसद्यैनां स्वयं (स्वीय) पाणिग्रहणेन कृतार्थय । तन्निर्बंधात्कुमारोऽपि सद्यः परिणिनाय तां ॥ २३३ ॥ महाकालोऽपि भूपालः स्वजामात्रे ततो ददौ । गजाश्वरत्नकोषाढ्यं स्वर्णादि करमोचने ॥ २३४ ॥ नवनाटकंवस्त्रालंकाररत्नादिभिर्भृतं । महायानं चतुःषष्टिकूपस्तंभयुतं तथा ॥ २३५ ॥ कुमारेंद्रोऽपि सामग्र्यां प्रगुणायां ततोऽचलत् । रत्नद्वीपं च सम्प्राप्य तस्थौ वारिनिधेस्तटे ॥ २३६ ॥ पश्यन्नाट्यविधिं यावदासीनोऽस्ति कुमारराट् । तावत्तत्रागतः कोऽपि पुरुषो वररूपभाक् ॥ २३७ ॥ विसृज्य नाटकं पृष्टः कुमारेंद्रेण सोंऽजसा । कस्त्वं ? कुतः समेतोऽसि ? वदाश्चर्यं च किंचन ॥ २३८ ॥ सोऽप्याह रत्नद्वीपेऽत्र रत्नसानुनगोत्तमे । सद्रत्नसंचयापुर्यां नृपोऽस्ति कनकध्वजः ॥ २३९ ॥ चतुर्णां तस्य पुत्राणामुपर्येका सुताभवत् । नाम्ना मदनमञ्जूषा जिनधर्मैकनिश्चया ॥ २४० ॥ नृपोऽन्यदा जिनगृहे निजपूर्वजकारिते । श्रीयुगादिजिनं नन्तुं परिवारयुतोऽप्यगात् ॥ २४१ ॥ विरचय्य महापूजां जिनस्य नृपपुत्र्यापि । सानन्दा वन्दते देवान् जिनध्यानपरायणा ॥ २४२ ॥ नृपोऽपि तत्कृतां पूजां वीक्ष्य विस्मितमानसः । दध्यौ जिनेंद्रपूजायां कीदृगस्या हि कौशलं ॥ २४३ ॥ यथावदनुरूपोऽस्या वरः कश्चन संभवेत् । तदा चिन्तासमुद्रस्य प्राप्नुयां पारमप्यहं ॥ २४४ ॥ इति चिंतयतो राज्ञः कुमारी गर्भगेहतः । यावन्निर्याति तावत्तत्कपाटयुगलं तथा ॥ २४५ ॥ आमिलद्दलयुक्तेनाप्युद्घाट्यते न वै यथा । कुमारी स्वकृतां पूजामपश्यन्ती रुरोद च ॥ २४६ ॥ नृपोऽपि दध्यौ दोषोऽयं ममैव यज्जिनालये । वरचिन्ताकृते शून्यमनाः क्षणमहोऽभवं ॥ २४७ ॥ ध्यात्वेति शासनसुरीप्रसादनविधौ नृपः । उपवासत्रयं चक्रे धूपोत्क्षेपपुरस्सरं ॥ २४८ ॥ तृतीयस्मिन्नेव दिने चिन्ताचांते नृपे निशि । सहसा दिव्यवाण्येवं प्रादुरासीज्जिनौकसि ॥२४९॥

भ्गानाथानान्यसौ क्षणात् ॥ २१५ ॥ महामंत्रस्मृतेरस्य मणष्टा दुष्टदेवता। दीनारलक्षं दत्वाथ श्रेष्ठी श्रीपालमूचिवान् ॥ २१६ ॥
दीनाराणां सहस्रेण मत्येकं मतिवत्सरं। गृहीतमस्ति सार्थे स्वे भटानामयुतं मया ॥ २१७ ॥ त्वमप्येष्यसि चेन्नद्र! तन्निजं
ब्रूहि गाञ्छितं। सोऽप्याह स्म यद्देतेभ्यः सर्वेभ्यो दीयते त्वया ॥ २१८ ॥ एकाकिनेऽपि तच्छ्रेष्ठिन्! यच्छ स्वच्छमना हि
मे। स्नेहलोभेन यन्नूनमुच्छिष्टमपि भुज्यते ॥ २१९ ॥ दीनारकोटिमादास्ये वर्षे नैतत्तथापि ते। दशसहस्रान् दास्यामि कुरु
पश्चागयोनितं ॥ २२० ॥ कुमारोऽथाह मे तात! रांया[1] कार्यं न किञ्चन। दत्वा भाटकमप्येतत्(प)किंत्वेष्यामि त्वया समं
॥ २२१ ॥ श्रेष्ठिनाप्योमिति मोक्ते यानारूढश्चचाल सः। माप्तानि बब्बरद्वीपे यानपात्राण्यपि क्षणात् ॥ २२२ ॥ महाकाला-
भिधस्तत्र नृपो भूरिबलान्वितः। श्रेष्ठिनं समुपागत्य वस्तुशुल्कममार्गयत् ॥२२३॥ अददानोऽथ तं श्रेष्ठी युद्धाय मगुणीभवन्।
सर्वं भटायुतेनापि जितो बद्धश्च तत्क्षणात् ॥ २२४ ॥ अत्रान्तरे कुमारोऽपि श्रेष्ठिनं माह भो! वद। क गतास्ते भटा? येभ्यः
कोटिर्दत्ता तदा त्वया ॥ २२५ ॥ अद्यापि तव सर्वस्वं तदितो वालयाम्यहं। यदार्द्धमपि दत्से मे सोऽपि तत्मतिपन्नवान्
॥ २२६ ॥ कुमारोऽपि ततः खड्गचापतूणीरभृत्स्वयं। बद्ध्वा नृपं महाकालमानिन्ये श्रेष्ठिसन्निधौ ॥ २२७ ॥ बंधान्मुक्तोऽथ
धवलो नृपघातार्थमुत्थितः। शरणागत इत्युक्त्वा कुमारस्तं न्यषेधयत् ॥ २२८ ॥ रुष्टेन श्रेष्ठिनाथैते वृत्तिभंगान्निराकृताः। कुमा-
रेंद्रस्य सेवार्थं सुभटाः समुपागमन् ॥ २२९ ॥ स्वभागागतयानेषु नियुक्तास्तेन ते पृथक्। सच्चक्रे च महाकालनृपं बन्धाद्विमोच्य
सः ॥ २३० ॥ महाकालोऽपि तं पुण्यश्लोकं नीत्वा निजे पुरे। वसनाशनभूपाद्यैः सत्कृत्येति जगाद च ॥ २३१ ॥ कुमारेंद्र!

१ 'रांया' लक्ष्म्या।

अर्हदादिपदानि त्वं ध्यायेर्यदनुभावतः । सुखेनैष्यामि कार्यो न हृदि खेदो मनागपि ॥ १९८ ॥ ज्ञात्वा तन्निश्चयं सापि
कृतकौतुकमंगला । विससर्ज सुतं सोऽपि चचाल करवालभृत् ॥ १९९ ॥ ग्रामाकरपुरादीनि शनैरुल्लंघयन्नसौ । पृच्छति स्म
वने कंचिन्नरं ध्यानैकतत्परं ॥ २०० ॥ कस्त्वं ? कथमिहैकाकी ? किं वा ध्यायसि मानसे ? । सोऽप्याह तं स्मराम्ये-
नां विद्यां सद्गुरुदेशितां ॥ २०१ ॥ न सिद्ध्यति परं भद्र! सा विनोत्तरसाधकं । नरोत्तम! ततस्त्वं मे भव तूत्तरसाधकः
॥ २०२ ॥ ततः कुमारसान्निध्यात्सिद्धविद्यः क्षणादसौ । ददौ कृतोपकाराय कुमारायौषधीयुगं ॥ २०३ ॥ उक्तं च जलता-
रिण्येकाऽपरा शस्त्रवारिणी । भुजयोर्धारणीये च वेष्टयित्वा त्रिधातुभिः ॥ २०४ ॥ ततः कुमारेण युतः स विद्यासाधको गिरेः ।
ययौ निकुंजे प्रोक्तं च धातुवादिनरैस्त्विदं ॥ २०५ ॥ देव ! त्वदुक्तकल्पेनाऽस्माकं साधयतामपि । केनापि कारणेनात्र रससिद्धिर्न
जायते ॥ २०६ ॥ कुमारोऽप्यूचिवान् भद्रा ! मद्दृष्ट्या साधयंत्विति । तैस्तथा विहिते जाता सिद्धिः कल्याणसंभवा ॥ २०७ ॥
तदाग्रहादथादाय कुमारः कांचनं कियत् । भृगुकच्छपुरं प्राप्तो विलसन् धनमिच्छया ॥ २०८ ॥ तत्रागतोऽथ कौशांब्या महे-
भ्यो धवलभिधः । यियासुः परकूलं स भूरि यानान्यसज्जयत् ॥ २०९ ॥ नृपादेशादथो नानाविधैर्भृत्वा क्रयाणकैः । चालय-
मानानि यानानि मनागपि न चाचलन् ॥ २१० ॥ चिन्तातुरेऽथ धवले शाकिन्येका हृदोऽवदत् । द्वात्रिंशल्लक्षणेनात्र पुंसा
बलिविधिं कुरु ॥ २११ ॥ नृपादेशेन निर्नाथं श्रीपालं समवेत्य तं । श्रेष्ठी बलिविधानार्थं निजपुंभिरधारयत् ॥ २१२ ॥ एषो-
ऽप्यजैषीद्धवलभटानेकोऽपि लीलया । ज्ञात्वामहानुभावं तमथ श्रेष्ठ्यप्यदोऽवदत् ॥ २१३ ॥ परोपकाररसिकोपायं कंचित्कुरु-
ष्व तं । चलन्ति यानपात्राणि येनामूनि क्षणादपि ॥ २१४ ॥ दीनारलक्षदानेऽथ श्रेष्ठिना स्वीकृते सति । अचालयन्नवपद-

यत्कमलप्रभां । सादाय स्वसुतं रात्रौ निरगान्नगराद्बहिः ॥ १७१ ॥ पत्युर्मृत्युः स्थाननाशो वैरित्रासोऽसहायता । बालः सुतः क्व गन्तव्यमिति? दुःखाद्रुरोद सा ॥ १७२ ॥ कथंचित्प्रविभातायां विभावर्यामथ भगे । चचालासौ पुरस्तावन्मिलितं कुष्ठिपेटकं ॥ १७३ ॥ तद् दृष्ट्वा कमला भीता भाषिता कुष्ठिभिश्च तैः । भद्रे! कासि? किमत्रैका? किमु रोदिषि वा कथं? ॥ १७४ ॥ मा भैर्भगिनि! भद्रं ते भवामस्ते सहोदराः । तयापि निजवृत्तान्तः सर्वस्तेभ्यो निवेदितः ॥ १७५ ॥ तेऽपि तां वेसरारूढां कृत्वा चेलुः शनैः शनैः । उद्भटा वैरिसुभटास्तावत्तत्र समागमन् ॥ १७६ ॥ अपृच्छंस्तेऽपि भो! दृष्टा कापि राज्ञी सुतान्विता । उक्तं तैरस्ति सार्थे नश्चेत्कार्यं तत्प्रगृह्यतां ॥ १७७ ॥ एकेनोक्तमिमेऽस्मभ्यं पामानं ददते खलु । त(स)देव दीयते सर्वैर्नष्टास्ते तद्भयात्ततः ॥ १७८ ॥ क्रमेणोज्जयिनीं प्राप्ता ससुता कमलप्रभा । स श्रीपालकुमारोऽपि क्रमात्प्रापन्नवं वयः ॥ १७९ ॥ ततः स कर्मदोषेणोंबररोगार्दितोऽभवत् । श्रुत्वा कुतोऽपि कमला वैद्यं कुष्ठामयापहं ॥ १८० ॥ कौशांब्यां पुरि संप्राप्ता ज्ञात्वा तत्र मुनेर्मुखात् । पुत्रशुद्धिमिह प्राप्ता सा चाहं कमलप्रभा ॥ १८१ ॥ एष मे तनुजन्मा च भद्रे! श्रीपालनामकः । यस्त्वत्सुताप्रियो जातो विख्यातो जगतीतले ॥ १८२ ॥ अथ सिंहरथस्यांगजन्मानं समवेत्य सा । प्रमोदपरतन्त्राभूद्विशेषाद्रूपसुन्दरी ॥ १८३ ॥ वृत्तान्तमेनं चाज्ञापि पुण्यपालनृपस्तया । जामातरं समादाय सोऽपि स्वस्थानमागमत् ॥ १८४ ॥ अथान्यदा गवाक्षस्थं नृपस्तं वीक्ष्य सप्रियं । अचिन्तयद्धी मत्पुत्री कुलं स्वमकलंकयत् ॥ १८५ ॥ क्रोधान्धेन मयाप्येकमयुक्तं विहितं खलु । कामान्धया मदनया द्वितीयं ही विधेर्वशात् ॥ १८६ ॥ अत्रान्तरे पुण्यपालो राज्ञे तच्चरितं जगौ । तच्छ्रुत्वा नरनाथोऽपि हृष्टस्तद्गृहमागमत् ॥ १८७ ॥ संभाष्य बहुमानेन सुतां जामातरं तथा । महामहेन नृपतिर्निजगेहं समानयत् ॥ १८८ ॥ श्रुत्वा तमथ वृत्तान्तं

॥ १५४ ॥ तत्
नाम्ना मदनसुन्दरी ॥ १५३ ॥ गुरूपदिष्टश्रीसिद्धचक्रमंत्रस्मृतेरथ। भद्रे! त्वदंगजो जातो जातरूपसमप्रभः ॥ १५५ ॥ तद्वत्स ! सवधूकस्त्वं जय
श्रुत्वा मुदितस्वांता यावद्गच्छ समागमं। तावद्दृष्ट्वा समं दृष्टो ज्योत्स्नयेव सुधाकरः ॥ १५६ ॥ इतश्च पुत्रीदुःखेन दुःखिता रूपसुन्दरी । स्वभ्रातुः
जीव गुणान्वितः। यावज्जीवं ममापि स्याच्छरणं धर्म आर्हतः ॥ १५६ ॥ इतश्च पुत्रीदुःखेन दुःखिता रूपसुन्दरी । स्वभ्रातुः
पुण्यपालस्य गृहे तिष्ठति शोकतः ॥ १५७ ॥ अथान्यदा जिनगृहे गता यावद्ददर्श सा। तावत्कुमारं तं जायाजननीभ्यां सम-
न्वितं ॥ १५८ ॥ उपलक्ष्य च पुत्रीं स्वां राज्ञी चेतस्यचिन्तयत्। नूनं तं कुष्ठिनं त्यक्त्वा मदनान्येन चालगत् ॥ १५९ ॥ कु-
ले कलंक आनीतो जिनधर्मश्च दूषितः। यया न तादृशं दुःखं सुतया मृतयैतया ॥ १६० ॥ यादृशीदृक्षवृत्तेन जीवंत्यापि
ममास्ति तत्। मत्कुक्षौ नापतद्वज्रं कथमेवं रुरोद सा ॥ १६१ ॥ मदनापि जगौ मातः! कोऽयं हर्षपदे तव। विपादो
येन जामाताऽप्येष तेऽभून्निरामयः ॥ १६२ ॥ विकल्पो यश्च ते चित्ते मातर्जातोऽस्ति मय्यपि। उदेति पश्चिमां भानु-
स्तथाप्येवं न संभवेत् ॥ १६३ ॥ ऊचे कुमारमात्रापि भद्रे! मैवंविधं वद। त्वत्सुतायाः प्रभावेण सूनुर्मेऽभून्निरामयः
॥ १६४ ॥ कथमत्रमथाचख्यौ मदनावृत्तमादितः। ततः कुमारजननीमवदद्रूपसुन्दरी ॥ १६५ ॥ लोकोत्तरगुणा भद्रे!
त्वत्सूनोर्विदिता मया। तथापि तत्कुलं श्रोतुं कर्णकौतूहलं मम ॥ १६६ ॥ साप्याख्यदंगदेशेऽस्ति चम्पानाममहापुरी।
तत्र सिंहरथो राजा तत्प्रिया कमलप्रभा ॥ १६७ ॥ तयोश्चिरेण पुत्रोऽभूत् श्रीपालो नामविश्रुतः। तस्मिन् द्विवर्षदेशीये
नरनाथो व्यपद्यत ॥ १६८ ॥ मतिसागरसंज्ञेन राज्यभक्तेन मंत्रिणा। सद्यः श्रीपालबालोऽयं पैत्र्ये राज्ये निवेशितः ॥१६९॥
तत्पितृव्योऽजितसेनः कियत्स्वपि दिनेष्वथ। सैन्यभेदं विधायास्य शिशोर्मंत्रितवान् वधं ॥ १७० ॥ ज्ञात्वा कुतोऽपि तन्मंत्र्यऽकथ-

॥ १३५ ॥ साधर्मिकाणां वात्सल्यं ये कुर्वंति नरोत्तमाः । श्रीमज्जिनेश्वरस्याज्ञा शिरस्यारोपिता हि तैः ॥ १३६ ॥ गुर्वादिष्टैस्ततस्तैरप्यानीयैतौ स्ववेश्मनि । स्थापयित्वान्नवस्त्राद्यैः सचक्राते प्रमोदिभिः ॥ १३७ ॥ तत्र स्थितः कुमारोऽथ श्रद्धावान्मदनान्वितः । गुरुवाक्यात्सिद्धचक्रतपश्चक्रे यथाविधि ॥ १३८ ॥ अष्टाह्निकातपः कृत्वा नवमेऽथ दिने सुधीः । श्रीसिद्धचक्रस्नपनांबुभिः स्वांगं च सिक्तवान् ॥ १३९ ॥ तेन शान्तिजलेनाप क्रमादुल्लाघतां वपुः । मणिमन्त्रौषधादीनामचिंत्यो महिमा यतः ॥१४०॥ तं तथाविधरोगार्तमपि रूपश्रिया तदा । दृष्ट्वा देवकुमाराभं चित्रपूर्णा न केऽभवन् ? ॥१४१॥ श्रीसिद्धचक्रमाहात्म्यमिति प्रत्यक्षमात्मनः । वीक्ष्य जैनमते रागं बबंधुर्निबिडं जनाः ॥ १४२ ॥ मदनाथ स्वनाथस्यालोक्य रूपं तथाविधं । प्राह प्रिय ! प्रसादोऽयं सर्वोऽपि गुरुपादयोः ॥ १४३ ॥ तादृग् नैवोपकुर्वंति मातृपित्रादयोऽप्यमी । निष्कारणदयापूर्णो गुरुर्यादृक् तु देहिनां ॥ १४४ ॥ कुमारो जिनधर्मस्य माहात्म्यमनुभूय तत् । जिनधर्मैकचित्तोऽभूत् फलैरेवोद्यमो यतः ॥ १४५ ॥ जिनं नत्वा जिनगृहान्निर्गच्छन्नन्यदा सकः । दृष्ट्वा कात्यायनी कांचिद्वनितां सहसाऽनमद् ॥ १४६ ॥ अहो ! अनभ्रा वृष्टिर्मे जाता मातुर्विलोकनात् । वदत्यस्मिन्निति ज्ञात्वा श्वश्रूं सापि ननाम तां ॥ १४७ ॥ पप्रच्छ जननी पुत्रं किमिदं वत्स ! दृश्यते । सोऽप्याह स्म स्नुषायास्ते प्रसादः पश्यतामिति ॥ १४८ ॥ साथ तद्वृत्तमाकर्ण्य सहर्षा समभूद्भृशं । शशंस स्वं च वृत्तांतमशेषमपि तद्यथा ॥ १४९ ॥ त्वां तथाविधरोगार्त्तं वत्स ! स्वच्छमते ! तदा । गृहे विमुच्य वैद्यार्थं कौशांब्यां पुरि जग्मुषी ॥ १५० ॥ दृष्ट्वा जिनगृहे कंचित्तत्र ज्ञानधरं मुनिं । अपृच्छं भगवन् ! सज्जः कदा मे भविता सुतः ॥ १५१ ॥ मुनिनोक्तं तदा भद्रे! सुतस्ते जगृहे बलात् । तेनैव कुष्ठिवृन्देन निर्मितश्च निजः प्रभुः ॥ १५२ ॥ तत्कृतोम्बरतामा स सांप्रतं मालवेशितुः । उदुवाह सुतां तत्र

दृश्विनः । भद्रजयस्थं कुर्याराधनं नवपदात्मकं ॥ ११७ ॥ अर्हन्तः सिद्धाचार्योपाध्यायाः सर्वेऽपि साधवः । दर्शनज्ञानचारित्र-
तपांर्मासि पदानि च ॥ ११८ ॥ एतैः पदैर्विरहितं तत्वं नास्त्यत्र किञ्चन । एतेष्वेव तथा दृष्टिवादः सर्वोऽवतीर्णवान् ॥११९॥
सिद्धाः सिद्ध्यन्ति सेत्स्यन्ति ये जीवा भुवनत्रये । सर्वेऽपि ते नवपदाराधनेनैव निश्चितं ॥१२०॥ एतैर्नवपदैः सिद्धं सिद्धचक्रं
मर्षीचितं । तदष्टदलपद्मस्थं ध्येयं ध्यानपरायणैः ॥ १२१ ॥ नादविन्दुकलोपेतं मायाबीजसमन्वितं । आदौ प्रणवसंयुक्तं ध्याये-
दर्हनमन्तरा ॥१२२॥ सिद्धादीनि चतुर्दिक्षु दर्शनादिपदानि च । विदिक्ष्वेतानि चत्वारि स्मर नित्यं प्रमोदभाक् ॥१२३॥ सिद्ध्य-
न्ति यत्प्रसादेन भुवमष्टापि सिद्धयः । अनन्तसौख्यो मोक्षोऽपि तस्य सन्निहितो भवेत् ॥ १२४ ॥ क्षान्तो दान्तो निरारम्भ उपशा-
न्तो जितेन्द्रियः । एतदाराधको ज्ञेयो विपरीतो विराधकः ॥१२५॥ तदेतदाराधकेनार्जवमार्दवशालिना । भाव्यं विशुद्धचित्तेन मु-
निना गृहिणापि च ॥१२६॥ आश्विनधवलाष्टम्या आरभ्याष्टमकारया । पूजयाष्टौ दिनान्याचामाम्लानि कुरु भावतः ॥ १२७ ॥
नवमे च दिने पञ्चामृतैः स्नात्रं विधाय च । श्रीसिद्धचक्रयंत्रस्य विधिनाराधनं कुरु ॥१२८॥ चैत्रेऽप्येवं तथा भूयोऽष्टाह्निका नवकेन
तत् । एकाशीत्याचाचामाम्लैः पूर्यते सकलं तपः ॥ १२९ ॥ कुर्वन्नेवं नवपदध्यानं मनसि धारय । सम्पूर्णे च तपस्यत्र विधिनो-
द्यापनं कुरु ॥ १३० ॥ कुष्ठेऽमुष्मिन् दुष्टकुष्ठज्वरक्षयभगंदराः । कासश्वासादयो रोगाः क्षीयन्ते तत्क्षणादपि ॥ १३१ ॥ न
स्यादस्यानुभावेन दास्यं प्रेष्यत्वमन्धता । मूकत्वं बधिरत्वं च दौर्भाग्यं चापि देहिनां ॥ १३२ ॥ एतदाराधनपरा न व-
न्ध्या विषवापि च । दुर्भगा मृतवत्सापि जायते जातु नारी न ॥ १३३ ॥ यदि वा किं बहूक्तेन प्रसादादस्य सर्वदा । मनो-
मनीषितं सर्वं जनः प्राप्नोत्यसंशयं ॥ १३४ ॥ गुरुरेवं सिद्धचक्रमहिमानं प्रकीर्त्य च । तत्रागतश्रावकेभ्यस्तद्वात्सल्यार्थमुक्तवान्

॥ ९९ ॥ मदनावचसा प्रातरुम्बरेशः समं तया । श्रीमदर्हद्गृहं प्राप्तो युगादिजिनमानमत् ॥ १०० ॥ अथ प्रसन्नवदना मदना मधुरस्वरा । प्रणम्य श्रीयुगादीशं स्तोतुमेवं प्रचक्रमे ॥ १०१ ॥ जयादिवरराजेंद्र ! जय प्रथमनायक ! । जय प्रथमयोगींद्र ! जय प्रथमतीर्थप ! ॥ १०२ ॥ भवार्णवे जरामृत्युरोगदुःखोर्मिसंकुले । मज्जतां यानपात्राभस्त्वमेव जिन ! दृश्यसे ॥ १०३ ॥ त्वं मे माता पिता भ्राता बन्धुः स्वामी सुहृद्गुरुः । गतिर्मतिर्जीवितव्यं शरणं च नमोऽस्तु ते ॥ १०४ ॥ इति घोररोगार्दिता येऽत्र ये च दुःखैः प्रपीडिताः । ते सर्वे सुखितां यान्ति त्वत्पादाब्जप्रसादतः ॥ १०५ ॥ इति स्तुतो मया भक्त्या श्रीयुगादिजिनेश्वरः । मनोऽभिमतदानाय भव कल्पद्रुमोपमः ॥ १०६ ॥ इत्थं जिनस्तुतिपरा मदना यावदस्ति सा । फलेन तावत्पुष्पस्रक् जिनकण्ठादुदच्छलत् ॥ १०७ ॥ जगृहे मदनोक्तेनोम्बरराजेन तत्फलं । पुष्पमालां स्वयं चाददानन्दोद्यतमानसा ॥ १०८ ॥ भणितं च तया स्वामिन् ! गतो रोगस्तनोस्तव । जातो येनैष संयोगो जिनराजप्रसादतः ॥ १०९ ॥ मदनाथ युता पत्या मुनींदुगुरुसंनिधौ । प्राप्ता प्रणम्य तत्पादाविति शुश्राव देशनां ॥ ११० ॥ मानुष्यत्वं कुलं रूपं सौभाग्यारोग्यसंपदः । स्वर्गापवर्गसौख्यानि लभ्यन्ते पुण्ययोगतः ॥ १११ ॥ एवं श्रीधर्ममाहात्म्यं विज्ञाय जगदद्भुतं । मिथ्यात्वपरिहारेण तत्र यत्नो विधीयतां ॥ ११२ ॥ इहास्तां विभवो भूयान् कुटुम्बं च महत्तमं । परं भवान्तरेऽवश्यं पुण्यमेव सहाचरं ॥ ११३ ॥ देशनान्ते गुरुः प्राह वत्से ! कोऽयं नरोत्तमः ? । मदनापि रुदंत्याख्यत् सर्वं वृत्तान्तमादितः ॥ ११४ ॥ विज्ञप्तं च विभो ! नान्यन्मम दुःखं हि किंचन । परं मिथ्यादृशो जैनं धर्मं निन्दन्ति तन्महत् ॥ ११५ ॥ कृत्वा प्रसादं तत्किंचिदुपायं कथय प्रभो ! । समं लोकापवादेन येनेयं क्षीयते हि रुक् ॥ ११६ ॥ कृपार्द्रमानसोऽथाख्यद् गुरुस्तद्दुःख-

नेनाासि त्वमिहानीतो विचारं हृदि मा कुरु ॥ ८१ ॥ श्रुत्वेति मदनोत्थाय तस्योम्बरवरस्य सा । विवाहलग्नवेलायां करं जग्राह पाणिना ॥ ८२ ॥ मातृमातुलमुख्योऽथ परिवारोऽसमंजसं । तद् दृष्ट्वा कुरुते हाहारवं शोकभरार्दितः ॥ ८३ ॥ तथापि नृपतिः कोपाटोपान्नैव निवर्त्तते । ज्ञाततत्वा मदनापि न सत्वाच्चलिता मनाक् ॥ ८४ ॥ याति वेसरमारोह्य मदनामुम्बरे नृपे । एके वदन्ति धिग्भूपमविचारिशिरोमणिं ॥ ८५ ॥ दैवं केचित्सुतां केचिज्जिनधर्मं च केचन । केऽपि निन्दंत्युपाध्यायं नैकवाचो जनो यतः ॥ ८६ ॥ शृण्वत्येवं वचांस्युच्चैरुम्बरेण समं ययौ । हृष्टेन पेटकेनापि चक्रे पाणिग्रहोत्सवः ॥ ८७ ॥ राज्ञाथ सुरसुन्दर्या विवाहार्थं निमित्तवित् । पृष्टः प्राह महालग्नमभून्मदनया यदा ॥ ८८ ॥ कुष्ठिनोऽस्य करोऽग्राहि साम्प्रतं तु न तादृशं । राजापि प्राह हुं ज्ञातं लग्नस्यास्य फलं मया ॥ ८९ ॥ अधुनापि निजां पुत्रीं सुमहेन विवाहये । इत्युक्त्वा मुदितो राजा विवाहं कृतवांस्तयोः ॥ ९० ॥ कुमारोऽप्यरिदमनः परिणीय निजां पुरीं । प्रस्थितः सुरसुन्दर्या समं लोकैर्निरीक्षितः ॥ ९१ ॥ भणंत्येकेऽनयोर्योगं कृतवान् कीदृशं विधिः । सुविनीता महापुण्या यद्वासौ सुरसुन्दरी ॥ ९२ ॥ नृपं केचिद्वरं केचित्कन्यां केचिज्जनास्तदा । प्राशंसन् शिवधर्मं च केचित्केचिच्च पण्डितं ॥ ९३ ॥ सन्मानं सुरसुन्दर्या मदनाया विडम्बनं । दृष्ट्वा समग्रलोकोऽपि समदुःखसुखोऽभवत् ॥ ९४ ॥ इतश्च कुष्ठिना तेन भणिता मदना निशि । याहि भद्रे! नरं कञ्चिद् यौवनं सफलीकुरु ॥ ९५ ॥ वेश्मेऽत्र च तिष्ठंत्या भाविता सुन्दरं न ते । मंयः कुसंगजनितं कुष्ठमासीन्ममापि यत् ॥ ९६ ॥ इति तद्वचनं श्रुत्वा मदना साश्रुलोचना । जगौ भूयोऽपि नो वाच्यमिदं नाथ! वचो मयि ॥ ९७ ॥ प्रथमं महिलाजन्म कीदृशं तत्पुनर्भवेत् । चेच्छीलविफलं तद्धि कांजिकं ववधितं ननु ॥ ९८ ॥ तत्प्राणनाथ! मरणं त्वमेव शरणं मम । उदगच्छत्सहस्रांशुर्वदतोरेवमेतयोः

तैः सम्भूयोम्बरव्याधिग्रस्त एको नृपः कृतः ॥ ६३ ॥ उम्बरराट् इति ख्यातोऽभितस्तैः कुष्ठिभिर्वृतः। वरवेसरमारूढो बम्भ्रमीत्यखिले पुरे ॥ ६४ ॥ महेभ्यानां कुले राजकुले मंत्रिकुलेऽपि च। गृह्णन् स्वपञ्जिकादानमेष आयाति सन्मुखं ॥ ६५ ॥ विहाय तदमुं मार्गं गम्यतेऽन्यपथा प्रभो! । तथा कृते कुष्ठिनोऽपि वलितास्तत्पथि द्रुतं ॥ ६६ ॥ राजा प्राह पुरो गत्वा मन्त्रिन्नेतान्निवारय। दत्वा प्रार्थितमप्येषां दर्शनं यन्न शोभनं ॥ ६७ ॥ यावन्मन्त्री करोत्येतत्तावत्तत्पेटकाद् द्रुतं। गलितांगुलिनामागात्कुष्ठी-मन्त्री नृपाग्रतः ॥ ६८ ॥ स चावदन्नृपं नाथाऽस्माकमुम्बरराणकः। सर्वत्र मान्यते सर्वैर्दानमानादिभिर्भृशं ॥ ६९ ॥ तेनास्माकं धनस्वर्णादिभिः कार्यं न किंचन। पुनरस्मत्प्रभोरेका राज्ञी कापि न विद्यते ॥ ७० ॥ कृत्वा प्रसादं तद्भूप! कन्यामेकां प्रदापय। युष्मद्दत्तेन चान्येन कृतं स्वर्णधनादिना ॥ ७१ ॥ निषिद्धो मन्त्रिणा भूयोऽप्यवदद् गलितांगुलिः। श्रुतास्माभिर्नृपस्यास्य कीर्तिरेवंविधा यथा ॥ ७२ ॥ कुरुते प्रार्थनाभंगं मालवेशो न कस्यचित्। हारयत्वेष तां कीर्तिं यद्वा यच्छतु कन्यकां ॥ ७३ ॥ बभाण भूपो युष्मभ्यं दास्यामि वरकन्यकां। हारयेत्स्वल्पकार्येण यतः कः कीर्तिमात्मनः? ॥ ७४ ॥ यासौ कृतघ्नतनया सा देयास्मै मया ध्रुवं। ध्यात्वेति नृपतिः सद्यो वलित्वागान्निकेतने ॥ ७५ ॥ आकार्य मदनां प्राह भूपोऽद्यापि हि मन्यसे। मत्प्रसादं तद्वरेण प्रवरेण विवाहये ॥ ७६ ॥ चेत्पुनर्निजकर्मैव मन्यसे तेन संप्रति। समानीतोऽस्त्यसौ कुष्ठी वरस्तत्त्वं वृणु स्वयं ॥ ७७ ॥ आहूय कुष्ठिनामीशं नृपः प्रादान्निजां सुतां। स च प्रोवाच भो राजन्! किमयुक्तं ब्रवीष्यदः ॥ ७८ ॥ एकमग्रेऽप्यहं पूर्वकृतकर्मभवं फलं। भुञ्जानोऽस्याः स्त्रियो देव! कथं जन्म विनाशये ॥ ७९ ॥ त्वं चेद्दास्यसि तद्देहि दासीं दासीसुतामथ। न चेत्तत्तेऽस्तु कल्याणं व्रजामि स्वनिकेतने ॥ ८० ॥ बभाण भूपो भद्रेयं मन्यते कर्मणः फलं।

दैवायत्तमनयोर्योगो भाग्ययोगेन संभवेत् ॥ ४५ पित्राथ मदना पृष्टा वरार्थं सा तु लज्जया । जिनवाक्ययशोद्भूतविवेका नाह किञ्चन ॥ ४६ ॥ पुनः पृष्टा नरेंद्रेण विहस्यैवं जगाद सा । तात ! किं पृच्छसीदं मां लज्जाकारं विवेक्यपि ॥ ४७ ॥ येनैवं कुलबालानां नोचितं हि वरार्थनं । यस्मै दत्ते पिता तं तु वृणुते कुलबालिका ॥४८॥ निमित्तमात्रं हि वरप्रदाने पितरावपि । पूर्वबद्धो हि सम्बन्धो यस्माज्जन्तुषु जायते ॥ ४९ ॥ यद्येन यादृशं कर्मोपार्जितं स्याच्छुभाशुभं । तत्तेन तादृशं सर्वं भोक्तव्यं निश्चयादपि ॥ ५० ॥ कन्या पुण्याधिका या तु दत्ता हीनकुलेऽपि सा । सुखिता पुण्यहीना तु सुकुलेऽपि हि दुःखिता ॥५१॥ तन्तात ! ज्ञाततत्त्वस्य गर्वोऽयं ते न युज्यते । मत्प्रसादाप्रसादाभ्यां यज्जनः सुखदुःखभाक् ॥ ५२ ॥ य एव पुण्यवांस्तस्य त्वमप्याशु ममीदृशि । पुण्यहीनस्तु यस्तस्य न प्रसीदसि जातुचित् ॥५३॥ इति तद्वचसा दूनो भूपः कोपकरालदृक् । प्राह रे ! मत्प्रसादेन वस्त्रालंकरणादिकं ॥ ५४ ॥ दधाना भव्यभोज्यानि भुञ्जानापि निरंतरं । यदेवं वक्षि तेन त्वं स्वकर्मफलमाप्नुहि ॥ ५५ ॥ युग्मं ॥ अथाह पर्षल्लोकोऽपि मुग्धेयं नावगच्छति । त्वमेव कल्पवृक्षोऽसि तुष्टो रुष्टो यमोपमः ॥५६॥ मदनोवाच धिग् स्वार्थलिप्सयाभक्तेऽप्यमी । जानन्तोऽपि नृपस्याग्रे कुर्वतेऽलीकभाषणं ॥ ५७ ॥ किमथो बहुनोक्तेन तुभ्यं यस्तात ! रोचते । वरः स मेऽस्तु चेत्पुण्यं निर्गुणोऽपि गुणी ततः ॥ ५८ ॥ यदिवा पुण्यहीनाहं सुन्दरोऽपि वरस्ततः । असुन्दरो भावी तात ! मत्कर्मदोषतः ॥ ५९ ॥ ततः प्रकुपितं ज्ञात्वा मन्त्री विज्ञप्तवान्नृपं । स्वामिन् ! समस्ति ते राजपाटिकासमयोऽधुना ॥ ६० ॥ प्रज्वलन्निव रोषेण घृतसिक्त इवानलः । ससैन्योऽथ नृपो राजपाटिकार्थं विनिर्गतः ॥ ६१ ॥ पुराद्बहिर्यो राजा निर्गच्छन् कुष्ठिपेटकं । दृष्ट्वा पप्रच्छ मन्त्रीशं सोऽप्युवाच यथातथं ॥ ६२ ॥ देवात्र नगरे सप्तशतसंख्याः किलासिनः ।

मोहिता तत्रादिमा सौभाग्यसुन्दरी । सम्यक्त्ववासिता बाढं द्वितीया रूपसुन्दरी ॥ २७ ॥ अथो मिथः प्रीतियुजोः सापत्न्येऽपि तयोः समं । आपन्नसत्त्वयोर्जाते उभे कन्ये मनोहरे ॥ २८ ॥ प्रमोदात्कारयामास पिता जन्मोत्सवं तयोः । सुरसुन्दरीमदनसुन्दरीत्यभ्यधत्त च ॥ २९ ॥ समं समर्पिते ते च शैवजैनमतज्ञयोः । शिवभूतिसुबुद्ध्याख्याचार्ययोः पाठहेतवे ॥ ३० ॥ परं तथाविधाचार्ययोगात्प्रागलभ्यमेतयोः । शैवे जैने मते चासीच्छिष्यस्तादृग् यथा गुरुः ॥ ३१ ॥ इत्थं कृतकलाभ्यासे ते कलाचार्यसंयुते । कलापरिक्षणकृते पितरं नंतुमीयतुः ॥ ३२ ॥ पित्रापि हृष्टमनसा निवेश्यात्मीयपार्श्वयोः । द्वयोः प्रज्ञापरीक्षायै समश्यापदमर्पितं ॥ ३३ ॥ यथा-' पुण्णेहिं लब्भइ एह '। ततस्तत्कालमत्यंतगर्वचञ्चलचित्तया । पूरिता सुरसुंदर्या समश्या शृण्वतः पितुः ॥ ३४ ॥ ' धण-जुव्वण-सुवड्डपण, रोगरहियनियदेह । मणवल्लहमेलावडु पुण्णेहिं लब्भइ एह ॥ ३५ ॥ तत् श्रुत्वा नृपतिस्तुष्टः प्राशंसत्तत्कलागुरुं । चतुर्विद्यानिधानेति परिपत्सकलापि च ॥ ३६ ॥ ततोऽपरा नृपादिष्टापूरयन्मदनापि तां । स्वभावसदृशा वाचा जिनधर्मपरायणा ॥ ३७ ॥ 'विणय-विवेक-प्रसन्नमण सीलसुनिम्मलदेह । परमप्पहमेलावडु पुण्णेहिं लब्भइ एह ॥ ३८ ॥' ततस्तज्जननी चोपाध्यायस्तुष्टौ न चेतरे । यतस्तत्त्वोपदेशो न मुदे मिथ्यादृशां भवेत् ॥ ३९ ॥ इतश्च कुरुदेशेऽस्ति नाम्ना शंखपुरी पुरी । दमितारिर्नृपस्तत्र प्रजां पाति पितेव यः ॥ ४० ॥ प्रतिवर्षं स चावन्तीपतिसेवार्थमाव्रजेत् । तत्स्थानेऽथान्यदागच्छत् सुतोऽरिदमनाभिधः ॥ ४१ ॥ दिव्यरूपं च तं वीक्ष्य चुक्षोभ सुरसुन्दरी । कामबाणैर्भृशं भिन्ना कटाक्षान् विक्षिपंत्यथ ॥ ४२ ॥ तदेकतानां तां दृष्ट्वा नृपोऽपि ज्ञाततन्मनाः । प्रोवाच ते वरः कोऽस्तु ? तुभ्यं वा रोचतेऽत्र कः ? ॥ ४३ ॥ तदनन्तरं प्रतिवाक्सज्जयाथ तयोदितं । तातपादाः सप्रसादाश्चेन्ममायं वरोऽस्तु तत् ॥ ४४ ॥ तथेति प्रतिपन्नेऽस्मिन् पर्षल्लोकोऽप्यदोऽवदत् ।

क्षान्त्या तथागतमथो लसद्रोमाञ्चकञ्चुकः । श्रीश्रेणिको नृपोऽप्यागाद्वन्दितुं सपरिच्छदः ॥ ९ ॥ पञ्चधाभिगमं कृत्वा दत्वा ति-
स्रः प्रदक्षिणाः । यथास्थानोचितभूदेशे देशेशः स निषण्णवान् ॥ १० ॥ भगवान् गौतमस्वामी गर्जत्पर्जन्यमञ्जुना । ध्व-
निना वक्तुमारेभे धर्मं शर्मनिबन्धनं ॥ ११ ॥ भो भव्या ! दशदृष्टान्तैर्मानुष्यं प्राप्य दुर्लभं । यतितव्यं दानशीलतपोभावेषु
सन्ततं ॥ १२ ॥ तत्रापि भावो नासीरवीरः सद्धर्मभूभृतः । तमन्तरेण यद्व्यर्थं दानादि तुषवापवत् ॥ १३ ॥ स मनो-
विषयस्तच्च निरालम्बं हि दुर्जयं । नियन्त्रणार्थं तस्योक्तं सालम्बं ध्यानमुत्तमैः ॥ १४ ॥ यद्यप्यालम्बनान्यत्र शास्त्रे सन्ति
बहून्यपि । तथापि नवपदानां ध्यानमुत्तममुच्यते ॥ १५ ॥ अर्हन्तः सिद्धा आचार्योपाध्यायाः सर्वसाधवः । दर्शनज्ञानचा-
रित्रतपांसीति पदावली ॥ १६ ॥ दशाष्टदोषविकलान् केवलालोकनिर्मलान् । स्मरार्हतस्तथा सिद्धान् सिद्धानन्तचतुष्टयान्
॥ १७ ॥ पञ्चाचारविचारज्ञान् स्मर सूरिपुरन्दरान् । सूत्रार्थाध्ययनपरान् स्मर वाचकपुंगवान् ॥ १८ ॥ शिवसाधनयोगेषु
नित्योद्युक्तान्मुनीन् स्मर । जिनोक्ततत्वश्रद्धानं सम्यग्धारय दर्शनं ॥ १९ ॥ पठ पाठय सद्ज्ञानं यानं भवमहार्णवे । चर दु-
श्चारित्रं तपस्तप सुदुस्तप ॥ २० ॥ एतैर्नवपदैः सिद्धं सिद्धचक्रं प्रकीर्त्तितं । श्रीधर्मसार्वभौमस्य सच्चक्रमिव मूर्त्तिमत् ॥२१॥
एतानि नवसंख्यान्यर्हदादीनि पदानि यः । आराधयेत् स प्राप्नोति श्रीश्रीपाल इव श्रियं ॥ २२ ॥ पृष्टवान् मगधेशोऽथ श्री-
पालः कोऽमुना कथं । सिद्धचक्रं समाराध्य संप्राप्तं ? फलमुत्तमं ॥ २३ ॥ उवाच गौतमेशोऽपि शृणु श्रेणिकभूपते ! । श्री-
सिद्धचक्रमाहात्म्यमतिचित्रकरं नृणां ॥ २४॥ तथाहि—इहैव भरतेऽवंतिदेशेपुज्जयिनी पुरी। पृथ्वीपालः प्रजापालस्तत्र नाम्ना
गुणैरपि ॥ २५ ॥ तस्यावरोधे सौंदर्यनिर्जिताशेषनायिके । जाते शुभे उभे देव्यौ देव्याविव भुवं गते ॥ २६ ॥ मिथ्यात्व-

॥ अर्हम् ॥

॥ जैनाचार्यश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

पण्डितश्रीसत्यराजगणिप्रणीतम्

# श्रीपालचरित्रम् ।

श्रिये श्रीमन्महावीरस्वामी वासवसेवितः । यद्वाचो भव्यजन्तूनां रज्जूयन्ते भवावटे ॥ १ ॥ अर्हदाद्यां नवपदीं ध्यात्वा हृत्पद्मसद्मनि । श्रीसिद्धचक्रमाहात्म्यमुत्तमं किमपि ब्रुवे ॥ २ ॥ अस्त्यत्र भरतक्षेत्रे देशे मगधनामनि । पुरं राजगृहं तत्र राजते श्रेणिको नृपः ॥ ३ ॥ तस्य प्रशस्यभूजानेर्जाने रूपश्रिया श्रियः । सुनन्दाचेल्लणाधारिण्याद्या धर्मप्रियाः प्रियाः ॥ ४ ॥ अभयः कोणिको हल्लविहल्लौ मेघनामकः । एवमाद्या अनेकेऽपि विवेकेनान्विताः सुताः ॥ ५ ॥ वसन्ति यत्र श्रीशालिभद्राद्या इभ्यपुङ्गवाः । यत्र वैभारगिरिणा भूषितोपान्तभूतलं ॥ ६ ॥ तत्रान्यदा निजपदैः पुनातुं पृथिवीतलं । श्रीवीरः समवासार्षीन्नगरोपान्तसीमनि ॥ ७ ॥ प्राहिणोत्प्रथमं शिष्यमिंद्रभूतिं गणेश्वरं । पुरे राजगृहे स्वामी लोकानां लाभहेतवे ॥८॥

" तस्मिन्काले चतुर्थारके श्रीमुनिसुव्रतस्वामिवारके मालवदेशे उज्जायिनी नाम नगरी आसीत्"। इति खरतरगच्छी-
यजयकीर्तिमुनिविरचितगद्यश्रीपालचरित्राभिप्रायेण श्रीमुनिसुव्रतस्वामितीर्थे सम्भाव्यते। तथा "तस्मिन्काले चतुर्थारके श्रीवासु-
पूज्यवारके मालवदेशे उज्जयिनी नाम नगरी आसीत्"। इति " प्रणम्य सिध्धचक्रं च, सद्गुरुं निजमानसे। श्रीपालचरितं व-
क्ष्ये, सुगमं शिष्यहेतवे ॥ १ ॥" एतन्मङ्गलाचरणात्मकाद्यवृत्तस्य निर्मातृनामविहीनस्य गद्यात्मकस्य चरित्राभिप्रायेण श्री-
वासुपूज्यभगवत्तीर्थे संभाव्यते च। अतो विमलतमविज्ञानवत ऋते सम्यग् निर्णेतुमस्मादृशा अल्पज्ञा नैव क्षमाः स्युः।

जगद्विख्यातजैनाचार्यन्यायांभोनिधिश्रीमद्विजयानन्दसूरीश्वर( आत्मारामजित् )शिष्यरत्नोपाध्यायश्रीमद्वीरविजयपूज्यपा
दान्तेवासिभिः विद्वद्वर्य्यैः पन्न्यासपदालंकृतैः श्रीमद्दानविजयगणिपुङ्गवैरेतचरित्रस्य प्रतिकृति( प्रेसकोपी )मुफाद्यवलोकनेन
महोपकृतिः कृता, अतस्तेषां महाशयानामुपकारं मन्ये। मुद्रापितं च श्रीजैनआत्मानन्दसभासेक्रेटरी–वल्लभदास–त्रिभुवनदास–
गांधीसाहाय्येन श्रीजैनआत्मवीरसभासेक्रेटरी–रतीलाल–गोरधनदास–वोरा–इति संज्ञितेन। ग्रन्थेऽस्मिन्मतिमान्द्यादिना यत्र
क्वचन स्खलनाः स्थिता भवेयुस्तत्र संशोध्य वाचनीयं धीधनप्रधानैर्मनीषिभिरिति याचमानोऽनुयोगाचार्यश्रीमद्दानवि-
जयगणिपुङ्गवक्रमकञ्जभृङ्गायमानो मुनिश्रीमंगळविजयसंज्ञकः लघ्वीमिमां प्रस्तावनां समाप्य व्युपरमतेः।

ता० ५-९-१९१५ } श्रीजैनआत्मवीरसभा

आत्मानन्दभुवन } भावनगर.

श्रीआत्मवीर-ग्रन्थमाला-ग्रन्थाङ्को द्वितीयः (२)

पण्डितश्रीसत्यराजगणिप्रणीतं

# श्रीपालचरित्रम् ।

पूज्यपादश्रीमन्मुक्तिविजय( मूलचन्द्र )गणिपुङ्गवपाशिष्यश्रीमल्लब्धिविजयमुनिप्रवरशिष्यश्रीमद्रंगविजयमुनिवरोपदिष्ट-वरतेज-ग्रामवास्तव्य-भावसार-गांडालाल-मानचन्द्र-वेलाणि-स्वर्गतस्वसुत-मगनलाल-श्रेयोर्थनिष्कासितद्रव्यसाहाय्येन

प्रकाशयित्री—भावनगरस्था श्रीजैनआत्मवीरसभा ।

इदं पुस्तकं भावपुर्यां रतीलाल गोरधनदास वोरा सेक्रेटरी श्रीजैनआत्मवीरसभा-इत्यनेन आनन्दाख्यमुद्रणालये लल्लुभात्रात्मज-गुलाबचन्द्रद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४१ आत्मसंवत् २० विक्रमसंवत् १९७१

लब्धिसूरीश्वरजैनग्रन्थमालायास्तृतीयोमणिः [ ३ ]

श्रीस्याद्वादिने नमः।  आत्मकमललब्धिसूरीश्वरेभ्यो नमः।

पण्डित सत्यराजगणिविरचितम्—

# श्री श्रीपालचरित्रम्।

सूरिसार्वभौम जैनाचार्य श्रीमद्विजयलब्धिसूरीश्वरशिष्येण
मुनि विक्रमविजयेन संशोधितम्।

जैनरत्न व्या० वा० कविकुलकिरीटाचार्यवर्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयगम्भीरसूरीश्वरोपदिष्ट वेरावलवास्तव्य शा. टोकरशीतनुज वर्धमानदासधर्मपत्नी राजकुंवरकृतोपधानाराधननिमित्तं तदीयसुपुत्र हीरालाल विहितार्थ साहाय्येन लब्धिसूरीश्वरजैनग्रन्थमालाकार्यवाहकेन जमनादासतनुज चन्दुलालेन प्रकाशितम्।

वीर २४५६.  आत्म ४३.  विक्रम १९८६  प्रत ५००.

श्रीआत्मवीर-ग्रन्थमाला-ग्रन्थाङ्को द्वितीयः (२)

पण्डितश्रीसत्यराजगणिप्रणीतं

# श्रीपालचरित्रम् ।

पूज्यपादश्रीमन्मुक्तिविजय( मूलचन्द्र )गणिपुङ्गवपादशिष्यश्रीमल्लब्धिविजयमुनिप्रवरशिष्यश्रीमद्रंगविजयमुनिवरोपदिष्ट-वरतेज-ग्रामवास्तव्य-भावसार-गांडालाल-मानचन्द्र-वेलाणि-स्वर्गतस्वसुत-मगनलाल-श्रेयोर्थनिष्कासितद्रव्यसाहाय्येन

प्रकाशयित्री—भावनगरस्था श्रीजैनआत्मवीरसभा ।

इदं पुस्तकं भावपुर्यां रतीलाल गोरधनदास वोरा सेक्रेटरी श्रीजैनआत्मवीरसभा-इत्यनेन आनन्दाख्यमुद्रणालये लल्लुभात्रात्मज-गुलाबचन्द्रद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४१ आत्मसंवत् २० विक्रमसंवत् १९७१

लब्धिसूरीश्वरजैनग्रन्थमालायास्तृतीयोमणि. [ ३ ]

श्रीस्याद्वादिने नमः। आत्मकमललब्धिसूरीश्वरेभ्यो नमः।

पण्डित सत्यराजगणिविरचितम्—

# श्री श्रीपालचरित्रम्।

सूरिसार्वभौम जैनाचार्य श्रीमद्विजयलब्धिसूरीश्वरशिष्येण
मुनि विक्रमविजयेन संशोधितम्।

जैनरत्न व्या० वा० कविकुलकिरीटाचार्यवर्यश्रीमद्विजयलब्धिसूरीश्वरपट्टधराचार्यश्रीमद्विजयगंभीरसूरीश्वरोपदिष्ट वेरावलवास्तव्य शा. टोकरशीतनुज वर्धमानदासधर्मपत्नी राजकुंवरकृतोपधानतपाराधननिमित्तं तदीयसुपुत्र हीरालाल-विहितार्थ साहाय्येन लब्धिसूरीश्वरजैनग्रन्थमालाकार्यवाहकेन जमनादासतनुज चन्दुलालेन प्रकाशितम्।

वीर २४६५. आत्म ४३. विक्रम १९९५. प्रतय. २५०

# श्री लब्धिसूरीश्वर जैनग्रन्थमाला ।



| | | | |
|---|---|---|---|
| १ | जैनव्रतविधिसंग्रह | ( सुधारावधारा साथे बिजी आवृत्ति ) | ०– ८–० |
| २ | हीरप्रश्नोत्तराणि | ( कीर्तिविजयगणिसमुच्चित ) | ०–१२–० |
| ३ | श्रीपालचरित्रम् | ( पण्डित सत्यराजगणिकृतम् ) | ०– ०–० |
| ४ | तत्त्वन्यायविभाकरः | ( श्रीमद्विजयलब्धिसूरीश्वरप्रणीतः ) | ( प्रेसमां ) |
| ५ | पंचसूत्रम् | ( हरिभद्राचार्यकृत टिकोपेतम् ) | ( प्रेसमां ) |
| ६ | आरंभसिद्धिः | ( हेमहंसगणिकृत टीकोपेता ) | ( प्रेसमां ) |

शाह चन्दुलाल जमनादास छाणि ( वडोदरा स्टेट )

मुद्रक शाह गुलाबचन्द लल्लुभाई, श्री महोदय प्रीन्टींग प्रेस–भावनगर.

# प्र....स्ता....व....ना

अयि सुरभारतीरतिमन्तो धीमन्तः ! जन्मजरामरणविपत्तिसङ्कुले, मिथ्यादर्शनाविरत्यादिमहाग्राहपरिपूर्णे, रागद्वेषजवनपवनदुर्धर्षे, नानाविधानिष्टसंयोगवियोगविचित्रवीचीनिचयसञ्चिते, पशुपुत्रकलत्रादिमहावर्तावृते, प्रबलमनोरथवेलाकुलाकुले, अतिविषमसंसारपारावारे, अनादिकालतः संसरद्भिरसुमद्भिः महापुण्योदयाद्दशोदाहरणेभ्यो दुर्लभतया प्रसिद्धिं गतो मानुषो भवोऽवाप्यते ।

स च मानुषो भवः सकलजीवाजीवादिपदार्थयथार्थप्ररूपकेण, अश्रद्धातधर्मप्रादुर्भावासाधारणकारणेन, नितान्तानवद्यान्याविज्ञातचरणकरणक्रियाप्रतिपादकेन, अविसंवादिप्रवचनेनानुशिष्टशासनानुकूलप्रवर्तनात् सफलीभवति । तत्र विविधविधेषु शास्त्राभिहितोपायेषु सर्वाननुष्ठातुं सर्वे न शक्नुवन्तीत्युपकारकजीविभिः स्याद्वादिभिः जीवयोग्यतानुगुणं नैकविधाराधनाः प्रदर्शिताः ।

तासु नैकविद्यामन्त्राद्यधिष्ठितदृष्टिवादाद्यागमग्रथितमहामन्त्रावतंसं यथासामग्रीपूर्वकंपरमविशुद्धचित्तेनानुष्ठातुस्तस्मिन्नेव भवे मोक्षदायि च सिद्धचक्राराधनमेव प्रवरतरं वर्वर्त्ति ।

तत्र परानुग्रहैकवत्सलैः स्याद्वादसमयपारावारपारीणैः श्रीमन्मुनिचन्द्रगुरुभिः नृपालपृथिवीपालनन्दिनीमदनावचसा, सिद्धान्तात् निष्कासितं पूर्वजननोपार्जितकर्मप्रादुर्भूतरौद्रवेदनाप्रदकुष्ठामयग्रस्तावनिपालश्रीपालस्य कृते ।

श्रीनवपदाराधनैहिकपारलौकिकसौख्यं कथं प्राप्यत इत्येतन्निनरचितश्रीपालमदनसुन्दरीपवित्रचरित्रेण पण्डितमण्डलमण्डन-

सत्यराजर्षिगणिः प्रबोधयति । अस्मिंश्च चरित्रे श्रीपालजन्म, पितृव्याजितसेनभयात् मात्रा सत्रा स्वनगर्या निर्गमनम्, सप्तशतकुष्ठिकदम्बकसमिलनम्, मदनसुन्दर्याः पाणिपीडनम्, गुरोरुपदेशनानुसारेण श्रीसिद्धचक्रस्याराधनम्, तेन नीरोगीभवनम्, विविधविषयावलोकनाय पृथिवीपर्यटनम्, धवलश्रेष्ठिकृतोपद्रवाणां सिद्धचक्रसंस्मरणतो दूरीभवनम्, अनेकपार्थिवकुमारीभिः समं परिणयनम्, स्वराज्यस्वायत्तीकरणम्, पराभवबीजवैराग्यात् सर्वविरत्यापन्नाजितसेनराजर्षिवंदनेन पूर्वजन्मवृत्तान्ताकर्णनमित्यादयः श्रीपालधराधवस्यातिक्रान्तोदन्ताः समासेनोदिताः । आस्ताम् श्रीपालो मदनसुन्दरी च श्रीमुनिसुव्रतस्वामितीर्थे ।

एतद् ग्रन्थावसानवर्तिभिः प्रशस्तप्रशस्तिश्लोकैरस्य ग्रन्थस्य प्रणेतारो वैक्रमपञ्चदशशताब्दीमासन्, तथा पूर्णिमागच्छीयगुणसागरसूरीश्वरान्तेवासिनः समुद्रसागरमुनिवरा एतद्ग्रन्थकर्तुर्गुरव इत्यवगम्यन्ते ।

एतच्चरित्रं कविकुलकिरीट-व्याख्यानवाचस्पति-आचर्यवर्य श्रीमद्विजयलब्धिसूरीश्वरपट्टप्रभावकाणां गम्भीरसूरिवराणामुपदेशेन वेरावलवास्तव्ययोः श्राद्धवर्ययोर्हीरालालदेवकरणयोर्द्रव्यसाहाय्यतः ' श्रीलब्धिसूरीश्वरजैनग्रन्थमालाया 'स्तृतीयमणितया प्रकाशितं । ग्रन्थेऽस्मिन्मतिमान्द्यादिना यन्त्रतो वा सञ्जाता अशुद्धयोऽपश्चिमविपश्चिद्भिः संशोध्यावलोकनीयमिति प्रार्थयते—

ईडरनगरे.
मार्गशीर्षबहुलपञ्चम्याम्
ता ११-१२-३८

मुनिर्विक्रमविजयः

श्री आत्मकमललब्धिसूरीश्वरेभ्यो नमः ॥

पण्डितश्रीसत्यराजगणिप्रणीतं श्रीसिद्धचक्रमाहात्म्यस्योपरि—

# श्री श्रीपालचरित्रम् ।



श्रिये श्रीमन्महावीर-स्वामी वासवसेवितः । यद्वाचो भव्यजन्तूनां रज्जूयन्ते भवावटे ॥ १ ॥ अर्हदाद्यां नवपदीं ध्यात्वा हृत्पद्मसद्मनि । श्रीसिद्धचक्रमाहात्म्यमुत्तमं किमपि ब्रुवे ॥ २ ॥ अस्त्यत्र भरतक्षेत्रे देशे मगधनामनि । पुरं राजगृहं तत्र राजते श्रेणिको नृपः ॥ ३ ॥ तस्य प्रशस्यभूजानेर्जाने रूपश्रिया श्रियः । सुनन्दाचेल्लणाधारिण्याद्या धर्मप्रियाः प्रियाः ॥ ४ ॥ अभयः कोणिको हल्लविहल्लौ मेघनामकः । एवमाद्या अनेकेऽपि विवेकेनान्विताः सुताः ॥ ५ ॥ वसन्ति यत्र श्री शालिभद्राद्या इभ्यपुङ्गवाः । यत्र वैभारगिरिणा भूषितोपान्तभूतलम् ॥ ६ ॥ तत्रान्यदा निजपदैः पुनानः पृथिवीतलं । श्रीवीरः समवासार्षीद्नगरोपान्तसीमनि ॥७॥ प्राहिणोत्प्रथमं शिष्यमिन्द्रभूतिं गणेश्वरं । पुरे राजगृहे स्वामी लोकानां लाभहेतवे ॥८॥

ज्ञात्वा तमागतमथो लसद्रोमाञ्चकञ्चुकः । श्रीश्रेणिको नृपोऽप्यागाद्वन्दितुं सपरिच्छदः ॥ ९ ॥ पञ्चधाभिगमं कृत्वा दत्त्वा तिस्रः प्रदक्षिणाः । प्रणम्योचितभूदेशे देशेशः स निषण्णवान् ॥ १० ॥ भगवान् गौतमस्वामी गर्जत्पर्जन्यमञ्जुना । ध्वनिना वक्तुमारेभे धर्मं शर्मनिबन्धनम् ॥११॥ भो भव्या ! दशदृष्टान्तैर्मानुष्यं प्राप्य दुर्लभम् । यतितव्यं दानशीलतपोभावेषु सन्ततम् ॥१२॥ तत्रापि भावो नासीरवीरः सद्धर्मभूभृतः । तमन्तरेण यद्व्यर्थं दानादि तुषवापवत् ॥ १३ ॥ स मनोविषयस्तच्च निरालम्बं हि दुर्जयम् । नियन्त्रणार्थं तस्योक्तं सालम्बं ध्यानमुत्तमैः ॥ १४ ॥ यद्यप्यालम्बनान्यत्र शास्त्रे सन्ति बहून्यपि । तथापि नवपदानां( सिद्धचक्रस्य ? )ध्यानमुत्तममुच्यते ॥ १५ ॥ अर्हन्तः सिद्धाचार्योपाध्यायाः सर्वसाधवः । दर्शनज्ञानचारित्रतपांसीति पदावली ॥ १६ ॥ दशाष्टदोषविकलान् केवलालोकनिर्मलान् । स्मरार्हतस्तथा सिद्धान् सिद्धानन्तचतुष्टयान् ॥ १७ ॥ पञ्चाचारविचारज्ञान् स्मर सूरिपुरन्दरान् । सूत्रार्थाध्ययनपरान् स्मर वाचकपुङ्गवान् ॥ १८ ॥ शिवसाधनयोगेषु नित्योद्युक्तान्मुनीन् स्मर । जिनोक्ततत्त्वश्रद्धानं सम्यग्धारय दर्शनम् ॥१९॥ पठ पाठय सद्ज्ञानं यानं भवमहार्णवे । चर दुश्चरचारित्रं तपस्तप सुदुस्तपम् ॥२०॥ एतैर्नवपदैः सिद्धं सिद्धचक्रं प्रकीर्त्तितम् । श्रीधर्मसार्वभौमस्य सच्चक्रमिव मूर्त्तिमत् ॥२१॥ एतानि नवसंख्यान्यर्हदादीनि पदानि यः । आराधयेत् स प्राप्नोति श्रीश्रीपाल इव श्रियम् ॥२२॥ पृष्टवान् मगधेशोऽथ श्रीपालः कोऽमुना कथं । सिद्धचक्रं समाराध्य संप्राप्तं ? फलमुत्तमम् ॥ २३ ॥ उवाच गौतमेशोऽपि शृणु श्रेणिकभूपते ! । श्रीसिद्धचक्रमाहात्म्यमतिचित्रकरं नृणाम् ॥२४॥ तथाहि—इहैव भरतेऽवन्तिदेशेषूज्जयिनी पुरी । पृथ्वीपालः प्रजापालस्तत्र नाम्ना गुणैरपि ॥ २५ ॥ तस्यावरोधे सौन्दर्यनिर्जिताशेषनायिके । जाते शुभे उभे देव्यौ देव्याविव भुवं गते ॥ २६ ॥ मिथ्यात्व-

सम्यक्त्ववासिता बाढं द्वितीया रूपसुन्दरी ॥ २७ ॥ अथो मिथः प्रीतियुजोः सापत्न्ये-र्मोदिता तत्रादिमा सौभाग्यसुन्दरी । सम्यक्त्ववासिता बाढं द्वितीया रूपसुन्दरी ॥ २८॥ प्रमोदात्कारयामास पिता जन्मोत्सवं तयोः । सुरसुन्दरीमद-नसुन्दरीत्यभ्यधत्त च ॥ २९ ॥ समं समर्पिते ते च शैवजैनमतज्ञयोः । शिवभूतिसुबुद्ध्याख्याचार्ययोः पाठहेतवे ॥ ३० ॥ पर नसुन्दरीत्यभ्यधत्त च ॥ २९ ॥ समं समर्पिते ते च शैवजैनमतज्ञयोः । शिवभूतिसुबुद्ध्याख्याचार्ययोः पाठहेतवे ॥ ३० ॥ पर
तथाविधाचार्ययोगात्प्रागल्भ्यमेतयोः । शैवे जैने मते चासीच्छिष्यस्तादृग् यथा गुरुः ॥ ३१ ॥ इत्थं कृतकलाभ्यासे ते कला-
चार्यसंयुते । कलापरीक्षणकृते पितरं नन्तुमीयतुः ॥ ३२ ॥ पित्रापि हृष्टमनसा निवेश्यात्मीयपार्श्वयोः । द्वयोः प्रज्ञापरीक्षायै
समस्यापदमर्पितं ॥३३॥ यथा–' पुण्णेहिं लब्भइ एह '। ततस्तत्कालमत्यन्तगर्वचञ्चलचित्तया । पूरिता सुरसुन्दर्या समस्या
शृण्वतः पितुः ॥ ३४ ॥ ' धण–जुव्वण–सुवड्ढपण, रोगरहियनियदेह । मणवल्लहमेलावडु पुण्णेहिं लब्भइ एह ॥ ३५ ॥ तत्
श्रुत्वा नृपतिस्तुष्टः प्राशंसत्तत्कलागुरुम् । चतुर्विद्यानिधानेति परिषत्सकलापि च ॥३६॥ ततोऽपरा नृपादिष्टापूरयन्मदनापि ताम् ।
स्वभावसदृशा वाचा जिनधर्मपरायणा ॥३७॥ 'विणय-विवेक-पसन्नमण सीलसुनिम्मलदेह । परमप्पहमेलावडु पुण्णेहिं लब्भइ एह
॥३८॥' ततस्तज्जननी चोपाध्यायस्तुष्टौ न चेतरे । यतस्तत्त्वोपदेशो न मुदे मिथ्यादृशां भवेत् ॥३९॥ इतश्च कुरुदेशेऽस्ति नाम्ना
शंखपुरी पुरी । दमितारिर्नृपस्तत्र प्रजां पाति पितेव यः ॥४०॥ प्रतिवर्षं स चावन्तीपतिसेवार्थमाव्रजेत् । तत्स्थानेऽथान्यदागच्छत्
सुतोऽरिदमनाभिधः ॥ ४१ ॥ दिव्यरूपं च तं वीक्ष्य चुक्षोभ सुरसुन्दरी । कामबाणैर्भृशं भिन्ना कटाक्षान् विक्षिपन्त्यथ ॥ ४२ ॥
तदेकतानां तां दृष्ट्वा नृपोऽपि ज्ञाततन्मनाः । प्रोवाच ते वरः कोऽस्तु ? तुभ्यं वा रोचतेऽत्र कः ? ॥ ४३ ॥ तदनन्तरं प्रति-
वाक्सज्जयाथ तयोदितं । तातपादाः सप्रसादाश्चेन्ममायं वरोऽस्तु तत् ॥ ४४ ॥ तथेति प्रतिपन्नेऽस्मिन् पर्षल्लोकोऽप्यदोऽवदत् ।

देवायमनयोर्योगो भाग्ययोगेन संभवेत् ॥ ४५ ॥ पित्राथ मदना पृष्टा वरार्थं सा तु लज्जया। जिनवाक्यवशोद्भूतविवेका नाह किञ्चन ॥ ४६ ॥ पुनः पृष्टा नरेन्द्रेण विहस्यैवं जगाद सा । तात ! किं पृच्छसीदं मां लज्जाकारि विवेक्यपि ॥ ४७ ॥ येनैवं कुलबालानां नोचितं हि वरार्थनं । यस्मै दत्ते पिता तं तु वृणुते कुलबालिका ॥ ४८ ॥ निमित्तमात्रं हि वरप्रदाने पितरावपि । पूर्वबद्धो हि सम्बन्धो यस्माज्जन्तुषु जायते ॥ ४९ ॥ यद्येन यादृशं कर्मोपार्जितं स्याच्छुभाशुभम् । तत्तेन तादृशं सर्वं भोक्तव्यं निश्चयादपि ॥ ५० ॥ कन्या पुण्याधिका या तु दत्ता हीनकुलेऽपि सा । सुखिता पुण्यहीना तु सुकुलेऽपि हि दुःखिता ॥५१॥ तत्तात ! ज्ञाततत्त्वस्य गर्वोऽयं ते न युज्यते । मत्प्रसादाप्रसादाभ्यां यज्जनः सुखदुःखभाक् ॥ ५२ ॥ य एव पुण्यवांस्तस्य त्वमप्याशु प्रसीदसि । पुण्यहीनस्तु यस्तस्य न प्रसीदसि जातुचित् ॥५३॥ इति तद्वचसा दूनो भूपः कोपकरालदृक् । प्राह रे ! मत्प्रसादेन वस्त्रालङ्कारणादिकम् ॥५४॥ दधाना भव्यभोज्यानि भुञ्जानापि निरन्तरम् । यदेवं वक्षि तेन त्वं स्वकर्मफलमाप्नुहि ॥ ५५ ॥युग्मं॥ अथाह पर्षल्लोकोऽपि मुग्धेयं नावगच्छति । त्वमेव कल्पवृक्षोऽसि तुष्टो रुष्टो यमोपमः ॥५६॥ मदनोवाच धिग् लक्ष्मीलवलाभकृतेऽप्यमी । जानन्तोऽपि नृपस्याग्रे कुर्वतेऽलीकभाषणम् ॥५७॥ किमथो बहुनोक्तेन तुभ्यं यस्तात ! रोचते । वरः स मेऽस्तु चेत्पुण्यं निर्गुणोऽपि गुणी ततः ॥ ५८ ॥ यदिवा पुण्यहीनाहं सुन्दरोऽपि वरस्ततः । असुन्दरो ध्रुवं भावी तात ! मत्कर्मदोषतः ॥ ५९ ॥ ततः प्रकुपितं ज्ञात्वा मन्त्री विज्ञप्तवान्नृपं । स्वामिन् ! समस्ति ते राजपाटिकासमयोऽधुना ॥ ६० ॥ प्रज्वलन्निव रोषेण घृतसिक्त इवानलः । ससैन्योऽथ नृपो राजपाटिकार्थं विनिर्गतः ॥ ६१ ॥ पुराद्बहिरथो राजा निर्गच्छन् कुष्ठिपेटकं । दृष्ट्वा पप्रच्छ मन्त्रीशं सोऽप्युवाच यथातथम् ॥ ६२ ॥ देवात्र नगरे सप्तशतसंख्याः किलासिनः ।

नः सम्भूयोम्बरव्याधिग्रस्त एको नृपः कृतः ॥ ६३ ॥ उम्बरराडिति ख्यातोऽभितस्तैः कुष्ठिभिर्वृतः । वरवेसरमारूढो बम्भ्रमी-
त्यखिले पुरे ॥ ६४ ॥ महेभ्यानां कुले राजकुले मन्त्रिकुलेऽपि च । गृह्णन् स्वपञ्जिकादानमेष आयाति सन्मुखम् ॥ ६५ ॥ वि-
हाय तदमुं मार्गं गम्यतेऽन्यपथा प्रभो ! । तथा कृते कुष्ठिनोऽपि वलितास्तत्पथि द्रुतम् ॥६६॥ राजा प्राह पुरो गत्वा मन्त्रिन्वे-
तान्निवारय । दत्त्वा प्रार्थितमप्येषां दर्शनं यन्न शोभनम् ॥६७॥ यावन्मन्त्री करोत्येतत्तावत्तत्पेटकाद् द्रुतं । गलिताङ्गुलिनामागा-
त्कुष्ठी मन्त्री नृपाग्रतः ॥ ६८ ॥ स चावदन्नृपं नाथाऽस्माकमुम्बरराणकः । सर्वत्र मान्यते सर्वैर्दानमानादिभिर्भृशम् ॥ ६९ ॥
तेनास्माकं धनस्वर्णादिभिः कार्यं न किंचन । पुनरस्मत्प्रभोरेका राज्ञी कापि न विद्यते ॥ ७० ॥ कृत्वा प्रसादं तद्भूप ! कन्या-
मेकां प्रदापय । युष्मद्दत्तेन चान्येन कृतं स्वर्णधनादिना ॥ ७१ ॥ निषिद्धो मन्त्रिणा भूयोऽप्यवदद् गलिताङ्गुलिः । श्रुतास्माभि-
र्नृपस्यास्य कीर्तिरेवंविधा यथा ॥ ७२ ॥ कुरुते प्रार्थनाभङ्गं मालवेशो न कस्यचित् । हारयत्त्वेष तां कीर्तिं यद्वा यच्छतु कन्य-
काम् ॥ ७३ ॥ बभाण भूपो युष्मभ्यं दास्यामि वरकन्यकाम् । हारयेत्स्वल्पकार्येण यतः कः कीर्तिमात्मनः ? ॥ ७४ ॥ यासौ
कृतघ्नतनया ना देयास्मै मया ध्रुवम् । ध्यात्वेति नृपतिः सद्यो वलित्वागान्निकेतने ॥ ७५ ॥ आकार्य मदनां प्राह भूपोऽद्यापि
हि मन्यसे । मत्प्रसादं तद्वरेण प्रवरेण विवाहये ॥ ७६ ॥ चेत्पुनर्निजकर्मैव मन्यसे तेन सम्प्रति । समानीतोऽस्त्यसौ कुष्ठी वर-
स्तस्यं शृणु स्वयं ॥ ७७ ॥ आहूय कुष्ठिनामीशं नृपः प्रादान्निजां सुतां । स च प्रोवाच भो राजन् ! किमयुक्तं ब्रवीष्यदः
॥ ७८ ॥ एकमप्यहं पूर्वकृतकर्मभवं फलम् । भुञ्जानोऽस्याः स्त्रियो देव ! कथं जन्म विनाशये ॥७९॥ त्वं चेद्दास्यसि त-
र्हि दासीं दासीसुतामथ । न चेत्तत्तेऽस्तु कल्याणं व्रजामि स्वनिकेतने ॥ ८० ॥ बभाण भूपो भद्रेयं मन्यते कर्मणः फलं ।

तेनासि त्वमिहानीतो विचारं हृदि मा कुरु ॥ ८१ ॥ श्रुत्वेति मदनोत्थाय तस्योम्बरवरस्य सा । विवाहलग्नवेलायां करं जग्राह पाणिना ॥ ८२ ॥ मातृमातुलमुख्योऽथ परिवारोऽसमञ्जसं । तद् दृष्ट्वा कुरुते हाहारवं शोकभरार्दितः ॥ ८३ ॥ तथापि नृपतिः कोपाटोपान्नैव निवर्त्तते । ज्ञाततत्त्वा मदनापि न सत्त्वाच्चलिता मनाक् ॥ ८४ ॥ याति वेसरमारुह्य मदनामुम्बरे नृपे । एके वदन्ति धिग्भूपमविचारिशिरोमणिम् ॥८५॥ दैवं केचित्सुतां केचिज्जिनधर्मं च केचन । केऽपि निन्दन्त्युपाध्यायं नैकवाक्यो जनो यतः ॥ ८६ ॥ शृण्वन्त्येवं वचांस्युच्चैरुम्बरेण समं ययौ । हृष्टेन पेटकेनापि चक्रे पाणिग्रहोत्सवः ॥ ८७ ॥ राज्ञाथ सुरसुन्दर्या विवाहार्थं निमित्तवित् । पृष्टः प्राह महालग्नमभून्मदनया यदा ॥ ८८ ॥ कुष्ठिनोऽस्य करोऽग्राहि साम्प्रतं तु न तादृशम् । राजापि प्राह हुं ज्ञातं लग्नस्यास्य फलं मया ॥८९॥ अधुनापि निजां पुत्रीं सुमहेन विवाहये । इत्युक्त्वा मुदितो राजा विवाहं कृतवांस्तयोः ॥९०॥ कुमारोऽथारिदमनः परिणीय निजां पुरीम् । प्रास्थितः सुरसुन्दर्या समं लोकैर्निरीक्षितः ॥ ९१ ॥ भणन्त्येकेऽनयोर्योगं कृतवान् कीदृशं विधिः । सुविनीता महापुण्या यद्वासौ सुरसुन्दरी ॥ ९२ ॥ नृपं केचिद्वरं केचित्कन्यां केचिज्जनास्तदा । प्राशंसन् शिवधर्मं च केचित्केचिच्च पण्डितम् ॥९३॥ सन्मानं सुरसुन्दर्या मदनाया विडम्बनम् । दृष्ट्वा समग्रलोकोऽपि समदुःखसुखोऽभवत् ॥ ९४ ॥ इतश्च कुष्ठिना तेन भणिता मदना निशि । याहि भद्रे ! नरं कञ्चिद् यौवन सफलीकुरु ॥९५॥ पेटकेऽत्र च तिष्ठन्त्या भविता सुन्दरं न ते । प्रायः कुसङ्गजनितं कुष्ठमासीन्ममापि यत् ॥ ९६ ॥ इति तद्वचनं श्रुत्वा मदना साश्रुलोचना । जगौ भूयोऽपि नो वाच्यमिदं नाथ ! वचस्त्वया ॥ ९७॥ प्रथमं महिलाजन्म कीदृशं तत्पुनर्भवेत् । चेच्छीलविकलं तद्धि कांजिकं क्वथितं ननु ॥ ९८ ॥ तत्प्राणनाथ ! मरणं त्वमेव शरणं मम । उदगच्छत्सहस्रांशुर्वदतोरेवमेतयोः

॥९९॥ मदनावचसा प्रानरुम्बरेश्वः समं तया । श्रीमदर्हद्गृहं प्राप्तो युगादिजिनमानमत् ॥ १०० ॥ अथ प्रसन्नवदना मदना मधुरस्वरा । प्रणम्य श्रीयुगादीशं स्तोतुमेवं प्रचक्रमे ॥१०१॥ जयादित्रयराजेन्द्र ! जय प्रथमनायक ! । जय प्रथमयोगीन्द्र ! जय प्रथमतीर्थप ! ॥ १०२ ॥ भवार्णवे जरामृत्युरोगदुःखोर्मिसङ्कुले । मज्जतां यानपात्राभस्त्वमेव जिन ! दृश्यसे ॥ १०३ ॥ त्वं मे माता पिता भ्राता बन्धुः स्वामी सुहृद्गुरुः । गतिर्मतिर्जीवितव्यं शरणं च नमोऽस्तु ते ॥ १०४ ॥ घोररोगादिना येऽत्र ये च दुःखैः प्रपीडिताः । ते सर्वे सुखितां यान्ति त्वत्पादाब्जप्रसादतः ॥ १०५ ॥ इति स्तुतो मया भक्त्या श्रीयुगादिजिनेश्वरः । मनोऽभिमतदानाय भव कल्पद्रुमोपमः ॥ १०६ ॥ इत्थं जिनस्तुतिपरा मदना यावदास्ति सा । फलेन तावत्पुष्पस्रक् जिनकण्ठादुदच्छलत् ॥ १०७ ॥ जगृहे मदनोक्तेनोम्बरराजेन तत्फलं । पुष्पमालां स्वयं चाददानन्दोद्यतमानसा ॥ १०८ ॥ भणितं च तया स्वामिन् ! गतो रोगस्तनोस्तत्र । जातो येनैष संयोगो जिनराजप्रसादतः ॥ १०९ ॥ मदनाथ युता पत्या मुनीन्दुगुरुसन्निधौ । प्राप्ता प्रणम्य तत्पादाविति शुश्राव देशनाम् ॥ ११० ॥ मानुष्यत्वं कुलं रूपं सौभाग्यारोग्यसंपदः । स्वर्गापवर्गसौख्यानि लभ्यन्ते पुण्ययोगतः ॥ १११ ॥ एव श्रीधर्ममाहात्म्यं विज्ञाय जगदद्भुतं । मिथ्यात्वपरिहारेण तत्र यत्नो विधीयताम् ॥ ११२ ॥ इहास्तां विभवो भूयान् कुटुम्बं च महत्तमं । परं भवान्तरेऽवश्यं पुण्यमेवानुगं मतम् ॥११३॥ देशनान्ते गुरुः प्राह वत्से ! कोऽयं नरोत्तमः ? । मदनापि रुदन्त्याख्यत् सर्वं वृत्तान्तमादितः ॥ ११४ ॥ विज्ञप्तं च विभो ! नान्यन्मम दुःख हि किंचन । परं मिथ्यादृशो जैनं धर्मं निन्दन्ति तन्महत् ॥ ११५ ॥ कृत्वा प्रसादं तत्किंचिदुपायं कथय प्रभो ! । समं लोकापवादेन येनेयं क्षीयते हि रुक् ॥११६॥ कृपार्द्रमानसोऽथाख्यद् गुरुस्तद्दुःख-

दुःखितः । भद्रेऽनवद्यं कुर्वाराधनं नवपदात्मकं ॥ ११७॥ अर्हन्तः सिद्धाचार्योपाध्यायाः सर्वेऽपि साधवः । दर्शनज्ञानचारित्रतपांसीति पदानि च ॥ ११८ ॥ एतैः पदैर्विरहितं तत्त्वं नास्त्यत्र किञ्चन। एतेष्वेव तथा दृष्टिवादः सर्वोऽवतीर्णवान् ॥११९॥ सिद्धाः सिद्ध्यन्ति सेत्स्यन्ति ये जीवा भुवनत्रये । सर्वेऽपि ते नवपदाराधनेनैव निश्चितं ॥१२०॥ एतैर्नवपदैः सिद्धं सिद्धचक्रं प्रकीर्त्तितं । तदष्टदलपद्मस्थं ध्येयं ध्यानपरायणैः ॥१२१॥ नादबिन्दुकलोपेतं मायाबीजसमन्वितं। आदौ प्रणवसंयुक्तं ध्यायेदर्हन्तमन्तरा ॥१२२॥ सिद्धादीनि चतुर्दिक्षु दर्शनादिपदानि च । विदिक्स्थितानि चत्वारि स्मर नित्यं प्रमोदभाक् ॥१२३॥ सिद्ध्यन्ति यत्प्रसादेन ध्रुवमष्टापि सिद्धयः । अनन्तसौख्यो मोक्षोऽपि तस्य सन्निहितो भवेत् ॥१२४॥ क्षान्तो दान्तो निरारम्भ उपशान्तो जितेन्द्रियः । एतदाराधको ज्ञेयो विपरीतो विराधकः ॥ १२५॥ तदेतदाराधकेनार्जवमार्दवशालिना । भाव्यं विशुद्धचित्तेन मुनिना गृहिणापि च ॥१२६॥ आश्विनधवलाष्टम्या आरभ्याष्टप्रकारया । पूजयाष्टौ दिनान्याचामाम्लानि कुरु भावतः ॥१२७॥ नवमे च दिने पञ्चामृतैः स्नात्रं विधाय च। श्रीसिद्धचक्रयन्त्रस्य विधिनाराधनं कुरु ॥१२८॥ चैत्रेऽप्येवं तथा भूयोऽष्टाह्निकानवकेन तत् । एकाशीत्याचाचामाम्लैः पूर्यते सकलं तपः ॥ १२९ ॥ कुर्वन्नेवं नवपदध्यानं मनसि धारय । सम्पूर्णे च तपस्यत्र विधिनोद्यापनं कुरु ॥ १३० ॥ कृतेऽमुष्मिन् दुष्टकुष्ठज्वरक्षयभगंदराः । कासश्वासादयो रोगाः क्षीयन्ते तत्क्षणादपि ॥ १३१ ॥ न स्यादस्यानुभावेन दास्यं प्रेष्यत्वमन्धता । मूकत्वं बधिरत्वं च दौर्भाग्यं चापि देहिनाम् ॥ १३२ ॥ एतदाराधनपरा न वन्ध्या विधवापि च । दुर्भगा मृतवत्सापि जायते जातु नारी न ॥ १३३ ॥ यदि वा किं बहूक्तेन प्रसादादस्य सर्वदा । मनोमनीषितं सर्वं जनः प्राप्नोत्यसंशयं ॥१३४॥ गुरुरेवं सिद्धचक्रमहिमानं प्रकीर्त्य च । तत्रागतश्रावकेभ्यस्तद्वात्सल्यार्थमुक्तवान्

श्रीमज्जिनेश्वरस्याज्ञा शिरस्यारोपिता हि तैः ॥ १३६ ॥ गुर्वादिष्टे-
॥ १३५ ॥ साधर्मिकाणां वात्सल्यं ये कुर्वंति नरोत्तमाः । स्थापयित्वाथ वस्त्राद्यैः समचक्राते प्रमोदिभिः ॥ १३७ ॥ तत्र स्थितः कुमारोऽथ श्रद्धावान्मदना-
न्वितः । गुरुवाक्यात्सिद्धचक्रस्नपनं च चक्रे यथाविधि ॥ १३८ ॥ अष्टाह्निकातपः कृत्वा नवमेऽथ दिने सुधीः । श्रीसिद्धचक्रस्नपना-
म्बुभिः स्वाङ्गं च सिक्तवान् ॥ १३९ ॥ तेन शान्तिजलेनाप क्रमादुल्लाघतां वपुः । मणिमन्त्रौषधादीनामचिन्त्यो महिमा यतः
॥ १४० ॥ तं तथाविधरोगार्तमपि रूपश्रिया तदा । दृष्ट्वा देवकुमाराभं चित्रपूर्णा न केऽभवन् ? ॥१४१॥ श्रीसिद्धचक्रमाहात्म्यमिति-
प्रत्यक्षमात्मनः । वीक्ष्य जैनमते रागं वबंधुर्निबिडं जनाः ॥१४२॥ मदनाथ स्वनाथस्यालोक्य रूपं तथाविधं । प्राह प्रिय ! प्र-
सादोऽयं सर्वोऽपि गुरुपादयोः ॥१४३॥ तादृग् नैवोपकुर्वन्ति मातृपित्रादयोऽप्यमी । निष्कारणदयापूर्णो गुरुर्यादृक् तु देहिनां
॥ १४४ ॥ कुमारो जिनधर्मस्य माहात्म्यमनुभूय तत् । जिनधर्मैकचित्तोऽभूत् फलैर्बोधमो यत. ॥ १४५॥ जिनं नत्वा जिन-
गृहान्निर्गच्छन्नन्यदा सकः । दृष्ट्वा कात्यायनीं कांचिद्वनितां सहसाऽनमत् ॥१४६॥ अहो ! अनभ्रा वृष्टिर्मे जाता मातुर्विलोक-
नात् । तदन्यस्मिन्निति ज्ञात्वा श्वश्रूं सापि ननाम ताम् ॥१४७॥ पप्रच्छ जननी पुत्रं किमिदं वत्स ! दृश्यते सोऽप्याह स्म स्तु-
षायास्ते प्रसादः पश्यतामिति (दृश्यतामिति) ॥१४८॥ साथ तद्वृत्तमाकर्ण्य सहर्षा समभूद्भृशम् । शशंस स्वं च वृत्तांतमशेषमपि
तद्यथा ॥ १४९ ॥ त्वां तथाविधरोगार्तं वत्स ! स्वच्छमते ! तदा । गृहे विमुच्य वैद्यार्थं कौशाम्ब्यां पुरि जग्मुषी ॥१५०॥ दृष्ट्वा
जिनगृहे कंचित्तत्र ज्ञानधरं मुनिं । अपृच्छं भगवन् ! सज्ञः कदा मे भविता सुतः ॥१५१॥ मुनिनोक्तं तदा भद्रे ! सुतस्ते जगृहे
यत्नात् । तेनैव कुष्ठिवृन्देन निर्मितश्च निजः प्रभुः ॥१५२॥ तत्कृतोम्बरनामा स साम्प्रतं मालवेशितुः । उदुवाह सुतां तत्र

नाम्ना मदनसुन्दरीम् ॥ १५३ ॥ गुरूपदिष्टश्रीसिद्धचक्रमन्त्रस्मृतेरथ । भद्रे ! त्वदङ्गजो जातो जातरूपसमप्रभः ॥ १५४ ॥
तच्छ्रुत्वा मुदितस्वान्ता यावदत्र समागमम् । तावद्दृष्ट्वा समं दृष्टो ज्योत्स्नयेव सुधाकरः ॥ १५५ ॥ तद्वत्स ! सवधूकस्त्वं जय
जीव सुखान्वितः । यावज्जीवं ममापि स्याच्छरणं धर्म आर्हतः ॥ १५६ ॥ इतश्च पुत्रीदुःखेन दुःखिता रूपसुन्दरी । स्वभ्रातुः
पुण्यपालस्य गृहे तिष्ठति शोकतः ॥ १५७ ॥ अथान्यदा जिनगृहे गता यावद्ददर्श सा । तावत्कुमारं तं जायाजननीभ्यां सम-
न्वितं ॥ १५८ ॥ उपलक्ष्य च पुत्रीं स्वा राज्ञी चेतस्यचिन्तयत् । नूनं तं कुष्ठिनं त्यक्त्वा मदनान्येन चालगत् ॥ १५९ ॥ कुले
कलङ्क आनीतो जिनधर्मश्च दूषितः । यया न तादृशं दुःखं सुतया मृतयैतया ॥ १६० ॥ यादृगीदृक्षवृत्तेन जीवन्त्यापि
ममास्ति तत् । मत्कुक्षौ नापतद्वज्रं कथमेवं रुरोद सा ॥ १६१ ॥ मदनापि जगौ मातः ! कोऽयं हर्षपदे तव । विषादो
येन जामाताऽप्येष तेऽभून्निरामयः ॥ १६२ ॥ विकल्पो यश्च ते चित्ते मातर्जातोऽस्ति मय्यपि । उदेति पश्चिमां भानु-
स्तथाप्येवं न संभवेत् ॥ १६३ ॥ उचे कुमारमात्रापि भद्रे ! मैवंविधं वद । त्वत्सुतायाः प्रभावेण सूनुर्मेऽभून्निरामयः
॥ १६४ ॥ कथमेवमथाचख्यौ मदनावृत्तमादितः । ततः कुमारजननीमवदद्रूपसुन्दरी ॥ १६५ ॥ लोकोत्तरगुणा भद्रे !
त्वत्सूनोर्विदिता मया । तथापि तत्कुलं श्रोतुं कर्णकौतूहलं मम ॥ १६६ ॥ साप्याख्यदंगदेशेऽस्ति चम्पानाममहापुरी । तत्र
सिंहरथो राजा तत्प्रिया कमलप्रभा ॥ १६७ ॥ तयोश्चिरेण पुत्रोऽभूत् श्रीपालो नामविश्रुतः । तस्मिन् द्विवर्षदेशीये नरनाथो-
व्यपद्यत ॥ १६८ ॥ मतिसागरसंज्ञेन राज्यभक्तेन मन्त्रिणा । सद्यः श्रीपालबालोऽयं पैत्र्ये राज्ये निवेशितः ॥ १६९ ॥ तत्पि-
तृव्योऽजितसेनः कियत्स्वपि दिनेष्वथ । सैन्यभेदं विधाय स्वशिशोर्मन्त्रितवान् वधं ॥ १७० ॥ ज्ञात्वा कुतोऽपि तन्मन्त्र्यऽकथ-

…ात्कमलप्रभाम् । सादाय स्वसुतं रात्रौ निरगान्नगराद्बहिः ॥१७१॥ पत्युर्मृत्युः स्थाननाशो वैरित्रासोऽसहायता । बालः सुतः
फ गन्तव्यमिति ? दुःखाद्रुरोद सा ॥ १७२ ॥ कथंचित्प्रविभातायां विभावर्यामथ प्रगे । चचालासौ पुरस्तावन्मिलितं कुष्ठि-
पेटकं ॥ १७३ ॥ तद् दृष्ट्वा कमला भीता भाषिता कुष्ठिभिश्च तैः । भद्रे ! कासि ? किमत्रैका ? किमु रोदिषि वा कथं ? ॥ १७४ ॥
मा भैषीर्भगिनि ! भद्रं भवामस्ते सहोदराः । तथापि निजवृत्तान्तः सर्वस्तेभ्यो निवेदितः ॥१७५॥ तेऽपि तां वेसरारूढां
कृत्वा चेलुः शनैः शनैः । उद्भटा वैरिसुभटास्तावत्तत्र समागमन् ॥ १७६ ॥ अपृच्छंस्तेऽपि भो ! दृष्टा कापि राज्ञी सुतान्विता ।
उक्तं तैरस्ति मा(न्य)थ नश्चेत्कार्यं तत्प्रगृह्यताम् ॥१७७॥ एकेनोक्तमिमेऽस्मभ्यं पामानं ददते खलु । त(स)देव दीयते सर्वैर्नष्टास्ते त-
द्भयात्ततः ॥ १७८ ॥ क्रमेणोज्जयिनीं प्राप्ता ससुता कमलप्रभा । स श्रीपालकुमारोऽपि क्रमात्प्रापन्नवं वयः ॥ १७९ ॥ ततः
स कर्मदोषेणोम्बररोगार्दितोऽभवत् । श्रुत्वा कुतोऽपि कमला वैद्यं कुष्ठामयापहम् ॥१८०॥ कौशाम्ब्यां पुरि संप्राप्ता ज्ञात्वा तत्र
मुनेर्मुखात् । पुत्रशुद्धिमिह प्राप्ता सा चाहं कमलप्रभा ॥ १८१ ॥ एष मे तनुजन्मा च भद्रे ! श्रीपालनामकः । यस्त्वत्सुताप्रियो
जातो विख्यातो जगतीतले ॥ १८२ ॥ अथ सिंहरथस्याङ्गजन्मानं समवेत्य सा । प्रमोदपरतन्त्राभूद्विशेषाद्रूपसुन्दरी ॥ १८३ ॥
पृच्छान्वमेनं चात्रापि पुण्यपालनृपस्तया । जामातरं समादाय सोऽपि स्वस्थानमागमत् ॥ १८४ ॥ अथान्यदा गवाक्षस्थं नृपस्तं
वीक्ष्य सप्रियम् । अचिन्तयद्धि मत्पुत्री कुलं स्वमकलङ्कयत् ॥ १८५॥ क्रोधान्धेन मयाप्येकमयुक्तं विहितं खलु । कामान्धया
मदनया द्वितीयं हि विधेर्वशात् ॥ १८६ ॥ अत्रान्तरे पुण्यपालो राज्ञे तच्चरितं जगौ । तच्छ्रुत्वा नरनाथोऽपि हृष्टस्तद्गृहमाग-
मत् ॥ १८७ ॥ संभाष्य बहुमानेन सुतां जामातरं तथा । महामहेन नृपतिर्निजगेहं समानयत् ॥ १८८ ॥ श्रुत्वा तमथ वृत्तान्तं

लोकः सर्वो विसिष्मिये । जिनेंद्रशासनस्योच्चैः प्रभावः प्रसृतो भुवि ॥ १८९ ॥ श्रीपालमन्यदा राजपाटिकार्थं विनिर्गतं । दृष्ट्वा ग्राम्येण केनापि पृष्टं कोऽयं नरोत्तमः ॥ १९० ॥ अन्येनोक्तं नरेन्द्रस्य जामातासौ निगद्यते । वचः श्रुत्वेति विच्छायः स समागान्निजौकसि ॥ १९१ ॥ दृष्ट्वा तं तादृशं माताऽपृच्छत्कालुष्यकारणं । सोऽप्याख्यदधमत्वस्य लक्षणं मेऽत्र तिष्ठतः ॥१९२॥ यतः—उत्तमाः स्वगुणैः ख्याता मध्यमास्तु पितुर्गुणैः । अधमा मातुलैः ख्याताः श्वशुरैश्चाधमाधमाः ॥१९३॥ तेनाहं गमनं कुर्वे विदेशदर्शनेच्छया । त्वया सुखेन वध्वा च मातः ! स्थेयं स्वमन्दिरे ॥ १९४ ॥ अथाह जननी वत्स ! खेदं मा कुरु चेतसि । गृहाण पैतृकं राज्यं श्वशुरस्य बलादपि ॥ १९५ ॥ त्रपाकरमिदं मातरभिमानवतां नृणाम् । स्वबलाद्यदि गृह्णामि कृतार्थः स्यां तदा ननु ॥१९६॥ अनुमन्यस्व तन्मातर्विदेशगमनाय माम् । येनाचिरेण राज्यं स्वं गृह्णामि स्वभुजौजसा ॥१९७॥

( तंपइ जंपइ जगणी बालो सरलोसि तंसि सुकुमालो । देसंतरेसु भमणं विसमं दुरकावहं चेव ॥ १ ॥ तो कुमरो जणणींपइ जंपइ मा माइ एरिसं भणसु । तावच्चिय विसमत्तं जाव न धीरा पवज्जंति ॥ २ ॥ पभणइ पुणोवि माया वच्छ ! य अम्हे सहागमिस्सामो । को अम्हं पडिबंधो तुमं विणा इत्थ ठाणंमि ॥ ३ ॥ कुमरो कहेइ अम्मो तुम्मेहिं सहागयाहिं सव्वत्थं । न भवामि मुक्कलपओ ता तुब्भे रहह इत्थेव ॥ ४ ॥ मयणा भणेइ सामिय ! तुम्हं अणुगामिणी भविस्सामि । भारं पि हु किंपि अहं न करिस्सं देहछायव्व ॥ ५ ॥ कुमरेणुत्तं उत्तमं धम्मपरे देवि ! मम वयणेणं । नियसस्सूसुस्सूसणपरा तुमं रहसु इत्थेव ॥ ६ ॥ मयणाह पइपवासं सइउ इच्छंति कहवि नो तहवि । तुम्हं आएसुच्चिय महप्पमाणं परं नाह ! ॥ ७ ॥ अरिहंताइपयाइं खणंपि न मयाउ मिल्हियव्वाइं । नियजणणिं च सरिज्जसु कयावि हु मंपि नियदासिं ॥ ८ ॥ )

अर्हदादिपदानि त्व ध्यायेर्यदनुभावतः । सुखेनैष्यामि कार्यो न हृदि खेदो मनागपि ॥ १९८ ॥ ज्ञात्वा तन्निश्चयं सापि कृतकौतुकमंगला । विससर्ज सुतं सोऽपि चचाल करवालभृत् ॥ १९९ ॥ ग्रामाकरपुरादीनि शनैरुल्लंघयन्नसौ । पृच्छति स्म वने कंचिन्नरं ध्यानैकतत्परम् ॥ २०० ॥ कस्त्वं ? कथमिहैकाकी किं वा ध्यायसि मानसे सोऽप्याह तं स्मराम्येना विद्यां मद्गुरुदेशिताम् ॥ २०१ ॥ न सिद्ध्यति परं भद्र ! सा विनोत्तरसाधकम् । नरोत्तम ! ततस्त्वं मे भवतूत्तरसाधकः ॥ २०२ ॥ ततः कुमारसान्निध्यात्सिद्धविद्यः क्षणादसौ । ददौ कृतोपकाराय कुमारायौषधीयुगम् ॥ २०३ ॥ उक्तं च जलतारिण्येकाऽपरा शस्त्रवारिणी । भुजयोर्धारणीये च वेष्टयित्वा त्रिधातुभिः ॥ २०४ ॥ ततः कुमारेण युतः स विद्यासाधको गिरेः । ययौ निकुञ्जे प्रोक्तं च धातुवादिनरैरस्त्विदं ॥ २०५ ॥ देव ! त्वदुक्तकल्पनाऽस्माकं साधयतामपि । केनापि कारणेनात्र रससिद्धिर्न जायते ॥ २०६ ॥ कुमारोऽप्यूचिवान् भद्र ! मद्दृष्ट्या साधयन्त्विति । तैस्तथा विहिते जाता सिद्धिः कल्याणसंभवा ॥ २०७ ॥ तदाग्रहादुपादाय कुमारः कांचनं कियत् । भृगुकच्छपुरं प्राप्तो विलसन् धनमिच्छया ॥ २०८ ॥ तत्रागतोऽथ कौशाम्ब्या महेभ्यो धवलाभिधः । ययामुः परकूलं स भूरि यानान्यसज्जयत् ॥ २०९ ॥ नृपादेशादथो नानाविधैर्भृत्वा क्रयाणकैः । चाल्यमानानि यानानि मनागपि न चाचलन् ॥ २१० ॥ चिन्तातुरेऽथ धवले शाकिन्येका छद्मोऽवदत् । द्वात्रिंशल्लक्षणेनात्र पुंसा बलिविधिं कुरु ॥ २११ ॥ नृपादेशेन निर्नाथं श्रीपालं समवेत्य तम् । श्रेष्ठी बलिविधानार्थं निजपुंभिरधारयत् ॥ २१२ ॥ एषोऽप्यजैर्षील्लक्षभटानेकोऽपि लीलया । ज्ञात्वामहानुभावं तमथ श्रेष्ठ्यप्यदोऽवदत् ॥ २१३ ॥ परोपकाररसिकोपायं कंचित्कुरुष्व तम् । चलन्ति यानपात्राणि येनामूनि क्षणादपि ॥ २१४ ॥ दीनारलक्षदानेऽथ श्रेष्ठिना स्वीकृते सति । अचालयन्नवपद-

२

ध्यानाद्यानान्यसौ क्षणात् ॥२१५॥ महामन्त्रस्मृतेरस्य प्रणष्टा दुष्टदेवता। दीनारलक्षं दत्त्वाथ श्रेष्ठी श्रीपालमूचिवान् ॥२१६॥ दीनाराणां सहस्रेण प्रत्येकं प्रतिवत्सरम् । गृहीतमस्ति सार्थे स्वे भटानामयुतं मया ॥ २१७ ॥ त्वमप्येष्यसि चेद्भद्र ! तन्निजं ब्रूहि वाञ्छितम् । सोऽप्याह स्म यदेतेभ्यः सर्वेभ्यो दीयते त्वया ॥ २१८ ॥ एकाकिनेऽपि तच्छ्रेष्ठिन् ! यच्छ स्वच्छमना हि मे । स्नेहलोभेन यन्नूनमुच्छिष्टमपि भुज्यते ॥ २१९ ॥ दीनारकोटिमादास्ये वर्षे नैतत्तथापि ते । दशसहस्रान् दास्यामि कुरु पश्चाद्यथोचितम् ॥ २२० ॥ कुमारोऽथाह मे तात ! रा[1]या कार्यं न किञ्चन । दत्त्वा भाटकमप्येतत्(ष)किंत्वेष्यामि त्वया समम् ॥ २२१ ॥ श्रेष्ठिनाप्योमिति प्रोक्ते यानारूढश्चचाल सः । प्राप्तानि बब्बरद्वीपे यानपात्राण्यपि क्षणात् ॥ २२२ ॥ महाकालाभिधस्तत्र नृपो भूरिबलान्वितः । श्रेष्ठिनं समुपागत्य वस्तुशुल्कममार्गयत् ॥ २२३ ॥ अददानोऽथ तं श्रेष्ठी युद्धाय प्रगुणीभवन् । समं भटायुतेनापि जितो बद्धश्च तत्क्षणात् ॥ ६२४ ॥ अत्रान्तरे कुमारोऽपि श्रेष्ठिनं प्राह भो ! वद । क्व गतास्ते भटा ? येभ्यः कोटिर्दत्ता तदा त्वया ॥ २२५ ॥ अद्यापि तव सर्वस्वं वादितो वालयाम्यहम् । यदार्द्धमपि दत्से मे सोऽपि तत्प्रतिपन्नवान् ॥ २२६ ॥ कुमारोऽपि ततः खड्गचापतूणीरभृत्स्वयं । बद्ध्वा नृपं महाकालमानिन्ये श्रेष्ठिसन्निधौ ॥ २२७ ॥ बन्धान्मुक्तोऽथ धवलो नृपघातार्थमुत्थितः । शरणागत इत्युक्त्वा कुमारस्तं न्यषेधयत् ॥ २२८ ॥ रुष्टेन श्रेष्ठिनाथैते वृत्तिभङ्गान्निराकृताः । कुमारेन्द्रस्य सेवायै सुभटाः समुपागमन् ॥ २२९ ॥ स्वभागागतयानेषु नियुक्तास्तेन ते पृथक् । सच्चक्रे च महाकालनृपं बन्धाद्विमोच्य सः ॥२३०॥ महाकालोऽपि तं पुण्यश्लोकं नीत्वा निजे पुरे । वसनाशनभूषाद्यैः सत्कृत्येति जगाद च ॥ २३१ ॥ कुमारेन्द्र !

[1] 'राया' लक्ष्म्या ।

मदायत्तं राज्यं प्राणाः प्रियोऽपि मे । तथापि यस्यां मदनसेना नाम्ना ममाङ्गजा ॥ २३२ ॥ प्रसद्यैनां स्वयं (स्वीय) पाणिग्रहणेन
कृतार्थय । तन्निर्बंधात्कुमारोऽपि सद्यः परिणिनाय ताम् ॥२३३॥ महाकालोऽपि भूपालः स्वजामात्रे ततो ददौ । गजाश्वरत्न-
कोशाढ्यं स्वर्णादि करमोचने ॥ २३४ ॥ नवनाटकं वस्त्रालंकाररत्नादिभिर्भृतम् । महायानं चतुःपट्टिकूपस्तभयुतं तथा ॥ २३५ ॥
कुमारेन्द्रोऽपि नामस्यां प्रगुणाया ततोऽचलत् । रत्नद्वीपं च सम्प्राप्य तस्यौ वारिनिधेस्तटे ॥ २३६ ॥ पश्यन्नाट्यविधिं याव-
दार्मीतोऽस्ति कुमारराट् । तावत्तत्रागतः कोऽपि पुरुषो वररूपभाक् ॥ २३७ ॥ विसृज्य नाटकं पृष्टः कुमारेन्द्रेण सोऽञ्जसा ।
दस्त्वं ? कुतः समेतोऽसि ? यदाश्चर्यं च किंचन ॥ २३८ ॥ सोऽप्याह रत्नद्वीपेऽत्र रत्नसानुनगोत्तमे । सद्रत्नसंचयापुर्यां नृपो-
ऽस्ति कनकध्वजः ॥ २३९ ॥ चतुर्णां तस्य पुत्राणामुपर्येका सुताभवत् । नाम्ना मदनमञ्जूषा जिनधर्मैकनिश्चया ॥ २४० ॥
नृपोऽन्यदा जिनगृहं निजपूर्वजकारिते । श्रीयुगादिजिनं नन्तुं परिवारयुतोऽप्यगात् ॥ २४१ ॥ विरचय्य महापूजां
जिनस्य नृपपुत्र्यपि । सानन्दा वन्दते देवान् जिनध्यानपरायणा ॥ २४२ ॥ नृपोऽपि तत्कृतां पूजां वीक्ष्य विस्मितमानसः ।
दध्यौ जिनेन्द्रपूजायां कीदृगस्या हि कौशलम् ॥ २४३ ॥ यथावदनुरूपोऽस्या वरः कश्चन संभवेत् । तदा चिन्तासमुद्रस्य
प्राप्नुयां पारमप्यहम् ॥ २४४ ॥ इति चिन्तयतो राज्ञः कुमारी गर्भगेहतः । यावन्निर्याति तावत्तत्कपाटयुगलं तथा ॥ २४५ ॥
अमिलद्धृढसंपृक्तनाप्युद्घाट्यते न वै यथा । कुमारी स्वकृतां पूजामपश्यन्ती रुरोद च ॥ २४६ ॥ नृपोऽपि दध्यौ दोषोऽयं ममैव
यज्जिनालये । वरचिन्ताहृते शून्यमनाः क्षणमहोऽभवम् ॥ २४७ ॥ ध्यात्वेति शासनसुरीप्रमादनविधौ नृपः । उपवासत्रयं चक्रे
नृपोऽक्षेपपुरस्सरम् ॥ २४८ ॥ तृतीयस्मिन्नेव दिने चिन्ताचान्ते नृपे निशि । सहसा दिव्यवाण्येवं प्रादुरासीज्जिनौकसि ॥२४९॥

यथा—दोस न कांइं कुमरी इह नरवर दोस न कोइ। जिण कारणिं जिणहर जडिओ तं निसुणउ सहु कोइ ॥ २५० ॥ जसु नर दिठइ होइसे जिणहरमुक्कदुवारु। सोइज मयणमंजूसिय होइसइ भरतारु ॥ २५१ ॥ सिरिरिसहर ओलगणी हुं चक्केसरी देवी। मासाभिंतर तसु नरह आणिसु निचल मेवी ॥ २५२ ॥ यद्दृष्ट्या जिनगेहस्य द्वारमुद्घटयिष्यति। ध्रुवं मदनमञ्जूषायोग्यो भावीवरोऽप्यसौ ॥ २५३ ॥ श्रीमद्युगादिनाथांह्रिभक्ता चक्रेश्वरी जगौ। मासान्तस्तमिहानेष्ये विधेया नाऽधृतिस्ततः ॥ २५४ ॥ तद्द्वारोद्घाटने सर्वैरपि यत्नो विनिर्ममे। स च सर्वोऽपि संजातोस्त्यवकेशीव निष्फलः ॥ २५५ ॥ पुरुषोत्तम! तच्चेत्त्वं द्वारमुद्घाटयिष्यसि। ध्रुवं चक्रेश्वरीवाणी तन्मासान्तर्मिलिष्यति॥ २५६ ॥ तदाकर्ण्य कुमारोऽपि तत्रागात्सपरिच्छदः। दृष्टे तस्मिन् झटित्येव द्वारमुज्झघटेऽथ तत् ॥२५७॥ ततः सर्वेऽपि सन्तुष्टा नृपामात्यादयो जनाः। नत्वा कुमारं पप्रच्छुर्निजवंशाभिधादिकम् ॥२५८॥ स्वमुखेन स्ववंशादिवर्णनं क्रियते कथम्?। इति स चिन्तयामास चारणर्षिस्तदागमत् ॥२५९॥ त वन्दित्वा नृपाद्येषु निषण्णेषु यथाक्रमम्। चारणश्रमणश्चक्रे देशनां क्लेशनाशिनीम् ॥ २६० ॥ धर्मः सम्यक्त्वमूलोऽयं तत्तु तत्त्वत्रयात्मकम्। सद्देवगुरुधर्माश्च तत्त्वानीति विदुर्जिनाः ॥ २६१ ॥ प्रत्येकं तेऽथ विज्ञेयाः क्रमाद् द्वित्रिचतुर्विधाः। अर्हत्सिद्धभेदभिन्नं देवतत्त्वं प्रकीर्तितम् ॥२६२॥ गुरुतत्त्वेऽपि भेदाश्चाचार्योपाध्यायसाधवः। धर्मोऽपि दर्शनज्ञानचारित्रसत्तपोऽभिधः ॥ २६३ ॥ यदेतेष्वेव नवसु दृष्टिवादोऽप्यवातरत्। तद्भक्त्याराधनीयानि पदानि तानि सर्वदा ॥ २६४ ॥ एतदाराधनात्कान्तिकीर्तिसौभाग्यसिद्धयः। इहलोकेऽपि जायन्ते श्रीपालस्येव निश्चितम् ॥२६५॥ राजापृच्छन्मुने! कोऽयं? श्रीपालोऽनेन वा कथम्?। सिद्धचक्रं समाराध्य प्राप्तमत्रैव सत्फलम् ॥ २६६ ॥ तं नृपायं समाचख्यौ मुनिः स्वकरसंज्ञया।

नृपः प्रदत्तवांस्तस्मै कुमाराय
नद्गृहमपि चाशेषं नृपपृष्टो मुनिर्जगौ ॥ २६७ ॥ श्रुत्वा तत्कुलनामादि विशेषाद् हृष्टमानसः । कुमारराद् ॥ २६९ ॥
निजां सुताम् ॥ २६८ ॥ नृपप्रदत्तावासेऽथ प्रियाद्वययुतः स्थितः । सिद्धचक्रस्मृतिं कुर्वन् सुखमास्ते स चापराधी बद्धो-
अन्यदा स्थानमासीनं नृपं कोऽपि व्यजिज्ञपत् । एकेन सार्थपेनात्र शुल्कं भग्नं विभो ! तव ॥ २७० ॥ एवमश्रद्दधानेऽथ कुमारे भूपतिस्तकम् ।
ऽस्ति दण्डः कोऽस्य विधीयते । सोऽपि श्रुक्षेपमात्रेण तं वधाय समादिशत् ॥२७१॥ सापराधेष्वपि प्रायः साधवः स्यु-
यानदानाययचावत्न कुमारेण लक्षितः ॥ २७२ ॥ धवलश्रेष्ठिनं तं स नृपादेशादमोचयत् । स्वपुरं प्रति ॥ २७४ ॥
र्दयापराः ॥ २७३ ॥ कियतोऽथ दिनान् स्थित्वा कुमारः श्वशुरालये । धवलश्रेष्ठिना युक्तश्चचाल सोऽपि तन्निजमा-
धवलोऽथ कुमारर्द्धिं पत्नीयुग्मं तथास्य च । दृष्ट्वा (च ?) चलचित्तोऽभूत् किमकार्यं हि लोभिनाम् ॥२७५॥ नृणाम् ।
त्रूनं चतुर्भिश्चमन्त्रयत् । त्रयः सुबुद्धिदास्तेऽथ धवलं प्रत्यबोधयन् ॥ २७६ ॥ अन्यस्यापि न युज्येत धनस्त्रीहरणं सखे ! विस्मृतं
प्रभोऽस्त्वदाज्ञाकृता ये तु ते स्वामिद्रोहपापिनः ॥२७७॥ यद्यानचालनं यच्च महाकालाद्विमोचनम् । विद्याधरेन्द्राच्च ॥ २७९ ॥
किं तवाधुना ? ॥ २७८ ॥ एवंविधोपकारैककारिण्यपि नरोत्तमे । यद् द्रोहबुद्धिस्तन्नूनं पिशुनस्यैव लक्षणम् इत्युदित्वा त्रयोऽप्येते
अन्यथा न त्वं धवलो लक्ष्म्या कृष्णयानया । अतः परं तु नास्माकं त्वयाऽऽलापो हि युज्यते ॥२८०॥ पश्याहं
ययुर्निजनिजास्पदम् । वक्रस्वभावस्तुर्योऽथ श्रेष्ठिनः पार्श्वमाश्रितः ॥ २८१ ॥ उवाच च विपक्षा हि श्रेष्ठिन्नेते त्रयोऽपि ते । कोऽप्युपा-
साधयाम्येष तत्क्षणात्तव चिन्तितम् ॥ २८२ ॥ श्रेष्ठ्यप्युवाच सत्यं त्वं मदर्थं साधयिष्यसि । तथापि ब्रूहि मित्रात्र
यो विधीयते ? ॥२८३॥ सोऽप्याह यद्दमञ्चेऽस्मिन् गुणाधारेण मण्डिते । आरोप्यैनं गुणच्छेदात् पातयिष्ये महार्णवे ॥२८४॥

ततस्त्वं नायको भावी स्त्रीणां श्रीणां च निश्चितम् । इत्युक्ते तेन तत्कार्यं श्रेष्ठी सिद्धममन्यत ॥२८५॥ अथान्यदा कौतुकार्थं तमारोप्योच्चमश्वके । तेन कूटप्रयोगेण पातयामास सोऽम्बुधौ ॥ २८६ ॥ निपतन् सहसा सोऽप्यर्हदादीन् ध्यायति स्म च । तत्प्रभावान्मीनपृष्ठे स्थितः कौंकणमाप्तवान् ॥ २८७ ॥ कस्मिन्नपि वने तत्र चम्पकाख्यतरोस्तले । सुप्तो जजागार यावद्ददर्श परितो भटान् ॥ २८८ ॥ तैर्विज्ञप्तं विभो ! स्थानाभिधानपुरवासिना । वसुपालनृपेणामी त्वत्कृते प्रेषिता वयं ॥ २८९ ॥ यदस्माभिस्त्वमेवात्र यथोक्तगुणशोभितः । दृष्टोऽसि तत्समागच्छ समारुह्य तुरंगमम् ॥ २९० ॥ तत्र प्राप्तः कुमारोऽपि सर्वारोपितविस्मयः । अभिगम्य नृपेणापि दानमानैश्च पूजितः ॥२९१॥ उक्तश्चानेकदा प्राप्तः कश्चिन्नैमित्तिकाग्रणीः । पुत्र्या मदनमञ्जर्याः पृष्टश्च वरहेतवे ॥ २९२ ॥ तेनोक्तं सितवैशाखदशम्यां जलधेस्तटे । छायातरुतले सुप्तः सोऽस्या भावी ध्रुवं वरः ॥ २९३ ॥ आनीतोऽस्येतदर्थं तत् पुत्र्याः पाणिग्रहं कुरु । इत्युदित्वा नृपश्चक्रे विवाहं वरकन्ययोः ॥ २९४ ॥ देशग्रामपुरादीनि ददतोऽपि नृपादसौ । स्थगीधरपदं स्वस्य सम्प्रार्थ्य लब्धवांस्ततः ॥ २९५ ॥ इतश्च धवलश्रेष्ठी सांयात्रिकनृणां पुरः । हा दैव ! किं त्वया चक्रेऽस्मत्प्रभोरीदृशी दशा ॥२९६॥ वदन्नेवं शुचाक्रान्तो हृदयं कुट्टयन् भृशम् । विललाप स भूयोऽपि लोकप्रत्ययहेतवे ॥ २९७ ॥ तच्छ्रुत्वा मदने हाहारवं भूमौ निपेततुः । कथंचिल्लब्धचैतन्ये स्त्रोरस्ताडं विलेपतुः ॥ २९८ ॥ धवलोऽपि तदागत्यावदन्मधुरया गिरा । भद्रे ! मा कुरुतं खेदं शोच्यते न मृतं गतम् ॥ २९९ ॥ स तावद्युवयोः स्वामी युवां मुक्त्वा गतो यदि । तथा पुनरप्येषोऽहं भावी वां प्राणवल्लभः ॥ ३०० ॥ इति श्रुतिकटुप्रायं वाक्यमाकर्ण्य दुःश्रवम् । विशेषाद् दुःखभाजिन्यौ दध्यतुर्मनसीति ते ॥ ३०१ ॥ ध्रुवमेतेन पापेनाकार्यऽकार्यमिदं यतः । भुज्यते यादृगुद्गारस्तादृक्ष एव निश्चितम् ॥ ३०२ ॥

